शारदा-संस्कृत-ग्रन्थमालाया एकविंशतिमम्प्रसूनम् ।

श्री-कृष्णयज्व-विरचिता—

# मीमांसा-परिभाषा

संस्कृत-हिन्दी-वाङ्मयी दीपिका-सहिता ।

सम्पादकः—

गौरीनाथ-पाठकः ।

काशी ।

❀ श्रीकृष्णः शरणं मम ❀

कृष्ण यज्व कोविदविरचिता

# मीमांसापरिभाषा ।

संस्कृत–हिन्दी–वाङ्मयी

## दीपिका सहिता ।

सा च


साहित्याचार्य्य–न्यायतीर्थ–व्याकरणशास्त्रिणा, राष्ट्रभाषाभूषणेन,

काशीविद्यापीठप्राच्यसर्वदर्शनाध्यापकेन, महामहाध्यापकेन,

दर्शनकेशरिणा पं० श्री गोपालशास्त्रिणा,

निर्मिता

मीमांसकशिरोमणिना हिन्दू विश्व विद्यालय पूर्व मीमांसा-

प्रधानाध्यापकेन श्री चिन्नस्वामिशास्त्रिणा

संशोधिता


—❀—


शारदा—भवनात्

काश्यां शारदायन्त्रालये श्रीलक्ष्मणसदाशिवदेशमुख-

द्वारा मुद्रयित्वा प्राकाश्यं नीता ।

वैक्रमाब्दाः १९९२ क०


—०❀०—

# भूमिका ।

'धर्मे सर्वं प्रतिष्ठितम्' इति श्रुत्यर्थस्य यथावद्विवेचने जगतोऽस्य चराचरस्योत्पत्तिस्थितिलयाख्यं त्रितयमपि धर्म एवाऽऽयतत इत्यवगम्यते । तादृशं धर्मस्वरूपं यथावदवबोधयितुं नाऽन्यत्तन्त्रं प्रभवति विना मीमांसाशास्त्रमिति नाऽविदितं सर्वेषां विपश्चिताम् । वेदान्तधर्मशास्त्रादिग्रन्थानामर्थं याथातथ्येनाऽवगन्तुं न्यायसहस्रोपबृंहितं मीमांसाशास्त्रमेव शरणीकरणीयमित्यपि सुविदितम् । तत्तादृशेऽस्मिन् मीमांसाशास्त्रे प्रविविक्षूणां माणवकानां कृते पण्डितवरेण श्रीकृष्णयज्वना विरचितेयं मीमांसापरिभाषा । ग्रन्थोऽयं बालानां कृते कृतोऽपि क्वचिद् गम्भीरतया, क्वचिदतिकठिनपदार्थसंवलिततया च समीचीनां कांचन विवृतिं विना न समग्रमुपकारमावहति तेभ्यः । श्रममिमं दूरीकर्तुकामैः प्रपण्डितप्रवरैः दर्शनकेसरिभिः श्रीगोपालशास्त्रिमहोदयैः ग्रन्थहृदयनिवेदिनी सरला वृत्तिर्हिन्दीभाषया कृता । क्वचित्क्वचित् गीर्वाणवाणीमय्यपि टिप्पणी विरचिता । सेयमुभय्यपि शास्त्रजिज्ञासुभ्यः समुचितमुपकारमादध्यादिति विश्वसिमि । अतिविरलैतच्छास्त्ररहस्यवेत्तरि कालेऽस्मिन् श्रीमतां शास्त्रिमहोदयानामत्र प्रवृत्तिं दृष्ट्वा नितरां सन्तुष्यति करणमाभ्यन्तरमस्मदीयम् । अतस्सर्वेऽपि पण्डितवरा विद्यार्थिनश्चैतस्समुचितमुपकारं प्राप्य श्रीमतां शास्त्रिमहोदयानां परिश्रमं सफलीकुर्युरिति विश्वसिमि ।

चिन्नस्वामिशास्त्री
पूर्वमीमांसा प्रधानाध्यापकः
( हिन्दूविश्वविद्यालय, काशी । )

वाराणसी
हनुमद्घट्टः १९–७–२६.

## अवश्य ध्यान दें।

आपको यदि संस्कृत पुस्तकों को मंगाने के लिये आर्डर भेजना होतो कृपया नीचे लिखे पते पर ही अपना आर्डर भेजें।

यहाँ से भेजे जाने वाले माल पर अधिक से अधिक कमीशन दिया जाता है और माल भेजने के समय अच्छी तरह देखकर भेजा जाता है। ग्राहकों को कभी शिकायत करने का मौका नहीं दिया जाता। एक वार परीक्षाकर अवश्य देखें।

# शुद्धिपत्रम् ।



| पृष्ठम् | पंक्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २ | ५ | यागहोमदानानामेव | यागहोमदानादीनामेव |
| ३ | २४ | कलञ्जं = तम्बाकू इति लोकप्रसिद्धः प्रदार्थः विपलिप्तशरदिग्धमृगमांसञ्चोच्यते । रक्तशुनमिति प्रामाणिकाः | कलञ्जपदेन तम्बाकू इति लोकप्रसिद्धः पदार्थः विपलिप्तशरदिग्धमृगमांसञ्चोच्यत इत्यशास्त्रज्ञाः रक्तलशुनमिति प्रामाणिकाः |
| ४ | १६ | अतिरात्रे षोडशिनं गृह्णाति नाऽतिरात्रे षोडशिनं गृह्णाति, उदिते जुहोति अनुदिते जुहोतीत्यादि विकल्पस्थले | अतिरात्रे षोडशिनं गृह्णाति नाऽतिरात्रे षोडशिनं गृह्णाति, व्रीहिभिर्जयेत यवैर्यजेतेत्यादिविकल्पस्थले |
| १२ | २२ | उपांशुयागः | उपांशुयाजः |
| १७ | १० | स्पर्गापूर्वं | स्वर्गापूर्वं |
| २२ | १९ | इडा पुरोडाशखण्डः | इडाशब्देनाऽत्र हुतशिष्टं हविर्भक्षणाय पात्रविशेषे निक्षिप्तं द्रव्यमुच्यते |
| ३१ | २० | फलजनकत्वेन न च | फलजनकत्वेन च |
| ३३ | २४ | स्तोम इति वेदोक्तसंज्ञाविशेषः । | स्तोम इति स्तोत्रगत संख्योच्यते |
| ३४ | २२ | गुणप्राप्तिं | गुणप्राप्ति |

| पृष्ठम् | पंक्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ३९ | २४ | छन्दोमशब्देन स्तोम उच्यते। गेयमन्त्रविशेपस्स्तोमः, यत्सगं स्तोमरहितं | चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंश इत्येते त्रयस्स्तोमाः छन्दोमशब्देनाऽभिधीयन्ते, गायत्रीत्रिष्टुब्जगती छन्दोभिरक्षरसंख्याभिर्मीयमानत्वात् । यत्सत्रं पूर्वोक्तस्तोमरहितं |
| ४५ | ९४ | गुणनामधेयप्रकरणान्तराणि | गुणप्रकरणान्तराणि |
| ४७ | १२ | गुणनामधेयप्रकरणान्तरैः | गुणप्रकरणान्तरैः |
| ४८ | १८ | वेदं कृत्वा वेदे करोति | वेदं कृत्वा वेदिं करोति |
| ५६ | ८ | अग्निं प्रणयति, अग्नि के पास जलयुक्त प्रणीता रक्खे | अग्निं प्रणयति, गार्हपत्य कुण्ड से आहवनीय कुण्ड में अग्नि को लेजाकर रखना |
| ५६ | १२ | होमवाक्य | महावाक्य |

[ ; ]

## मीमांसापरिभाषास्थानां वेदवाक्याना—

## मनुक्रमणिका ।


| वेदवाक्यानि— | पृष्ठे |
|---|---|
| १—अग्निहोत्रं जुहोति | ५ |
| २—दध्ना जुहुयात् | ५, १६, ४७ |
| ३—अग्निहोत्रं जुहुयात् स्वर्गकामः | ५, ७ |
| ४—दध्नेन्द्रियकामस्य जुहुयाद् | ६, ४७ |
| ५—सोमेन यजेत | ६, ३६ |
| ६—उद्भिदा यजेत पशुकामः | ६, ३५ |
| ७—अग्निं प्रणयति | ७ |
| ८—अग्निषु समिध आदधाति | ७ |
| ९—यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौणमास्यां चाच्युतो भवति | १० |
| १०—ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छद् | १० |
| ११—उपांशुयाजमन्तरा यजति | १० |
| १२—तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् | १० |
| १३—य एवं विद्वान् पौर्णमासीं यजते । | १० |
| १४—सौर्य्यं चरुं निर्वपेत् | ११ |
| १५—व्रीहीन् प्रोक्षति | ११, १४, २७ |
| १६—समिधो यजति | ११, १७, ४६, ४९ |
| १७—ऐन्द्रं दध्यमावास्यायां | ११ |
| १८—ऐन्द्रं पयोऽमावास्यायां | ११ |
| १९—य एवं विद्वान् यजते अमावास्यां | १२ |

| वेदवाक्यानि— | पृष्ठे |
| --- | --- |
| २०—दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत | १२, १७ |
| २१—व्रीहीनवहन्ति | १४,२५,२६ |
| २२—इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते | १५, ४१ |
| २३—स्रुवेणावद्यति | १६ |
| २४—अग्नये त्वा जुष्टं निर्वपामि | १६ |
| २५—इषे त्वेति च्छिनत्ति | १७ |
| २६—तनूनपातं यजति | १७, ४९ |
| २७—आज्यभागौ यजति | १७ |
| २८—शुन्धध्वं ( दैवाय कर्मणे देवयज्यायै ) | १७ |
| २९—ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः | १८ |
| ३०—उभा वामिन्द्राग्नी | १८ |
| ३१—कदाचनस्तरीरसि ( नेन्द्र सश्चसि दाशुषे ) इत्यैन्द्र्या गार्हपत्य मुपतिष्ठते | १८ |
| ३२—योनिं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः | १९ |
| ३३—सकृदुपस्तृणाति, द्विर्हविषोऽवद्यति, सकृदभिघारयति चतुरवत्तं जुहोति | २३ |
| ३४—अग्नये जुष्टमभिघारयामि | २४ |
| ३५—वषट्कृते जुहोति | २४ |
| ३६—शकृत् सम्प्रविध्यति | २४ |
| ३७—लोहितं निरस्यति | २४ |
| ३८—व्रीहिभिर्यजेत, यवैर्यजेत | २५, ८२ |
| ३९—वत्समालभेत | २५ |
| ४०—तप्ते पयसि दध्यानयति ( सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् ) | २५, ४६ |

वेदवाक्यानि— पृष्ठे
४१—अग्नीनादधीत २६
४२—स्वाध्यायोऽध्येतव्यः २६, ३१
४३—यावज्जीवमग्निहोत्रं जुहोति २७
४४—सायं जुहोति, प्रातर्जुहोति २७
४५—अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् २७
४६—वायव्यं श्वेतमालभेत भूतिकामः २८
४७—स्वर्गकामो यजेत २८
४८—ज्योतिष्टोमेन स्वर्गकामो यजेत ३२
४९—त्रिवृत् पञ्चदशः सप्तदशः स्तोमा । ३२
५०—अग्निर्ज्योति ज्योतिरग्निः स्वाहेति सायं जुहोति ३४
५१—श्येनेनाभिचरन् यजेत ३४
५२—यथा ह वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन ३४
५३—चित्रया यजेत पशुकामः ३६, ३५
५४—दधि, मधु, घृतमापो धानास्तत्संसृष्टं प्राजापत्यं ३६
५५—अग्नीषोमीयं पशुमालभते ३७
५६—पशुना यजेत ३७, ३८
५७—ग्रहं संमार्ष्टि ३७
५८—अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति ३८
५९—असत्रं वा एतद्यदच्छन्दोमम् ३९
६०—अश्रुजं हि रजतं यो बर्हिषि ददाति पुराऽस्य संवत्सराद् गृहे रुदन्ति ३९
६१—शोभतेऽस्य मुखं य एवं वेद ३९
६२—वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति ३९

वेदवाक्यानि— पृष्ठे

६३—अग्निर्वा अकामयत ४०
६४—उमशर्पद्धिया धिया त्वा वध्यासुः ४०
६५—अक्ताः शर्करा उपदधाति ४०
६६—तेजो वै घृतम् ४०
६७—अतिरात्रे षोडशिनं गृह्णाति नाति० ४२
६८—बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति ४३
६९—राजन्य-वसिष्ठादीनां नाराशंसी द्वितीयः
प्रयाजस्तनूनपादन्येषाम् ४४
७०—औदुम्बरीं स्पृष्ट्वोद्गायेत् ४४
७१—तिस्र आहुतीर्जुहोति ४६
७२—अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन
सहस्रदक्षिणेन यजेत । ४६
७३—उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति ४७
७४—पुरोडाशकपालेन तुषानुपवपति ४८
७५—अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ४९
७६—मग्निहोत्रं जुहोति यवागूं पचति ४९
७७—सप्तदश प्राजापत्यान् पशूनालभते ४९
७८—सह पशूनालभते ४९

—ः॰ः—

❁ ॐ श्रीकृष्णः शरणं मम ❁

# मीमांसापरिभाषा ।

सूर्य(१)नारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥
बालानां शास्त्रसिद्धार्थलेशबोधाय धीमताम् ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥

❁ ॐ ❁

## दीपिका ।

कौशल्यां मातरं नत्वा तातं क्षेमधरन्तथा ।
नित्यानन्दं गुरुञ्चैवच्छात्राणां हितकाम्यया ॥१॥
श्रीगोपालो गिरो देव्याः प्रसादात्सरलां लघुम् ।
मीमांसापरिभाषाया दीपिकां तनुते मुदा ॥२॥

---

( १ ) शिष्टाचारानुमितवेदबोधितेष्टसाधनताकं मङ्गलमारचयन् ग्रन्थकृत् कृष्णयज्वा सुधीः श्लेषाऽलङ्कारेण स्वपितरं सूर्य्यनारायणं सर्वजननमस्यं श्रीसूर्य्यदेवञ्च तथा त्रिपुरसुन्दरीं स्वमातरं, त्रिपुराणामसुरविशेषाणाम् असून् प्राणान् दारयतीति विग्रहे शकन्ध्वादित्वादकारस्य पररूपत्वे, 'पूःसर्व-

## धर्माधर्मनिरूपणम् ।

इह खलु महर्षिणा जैमिनिना द्वादश(१)लक्षण्यां पूर्व्वमीमांसायां धर्म्मा(२)धर्म्मावेवानुष्ठानोपयोगितया विचारितौ । तत्र वेदबो-

---

योर्दोरिसहो:' इत्यनेन वाहुलकादसुशब्दस्यापि सुमि च सिद्धस्य त्रिपुरसुन्दरीशब्दस्य वाच्यां, त्रीणि पुराणि ब्रह्म-विष्णु-शिवशरीराणि यस्मिन् स त्रिपुरः परशिवः तस्य सुन्दरीमिति वा ललितां देवीं । तथा अधिगता लब्धा अर्थाः शास्त्रार्था येभ्यस्तान् स्वगुरून्, अधिगता विदिता अर्था मीमांसातत्त्वानि यैस्तान्गुरून् श्रेष्ठान् जैमिनिप्रभृतीन् मीमांसाशास्त्रप्रणेतॄंश्च, प्रणम्य धीमतां प्रशस्तबुद्धिशालिनां परन्तु बालानाम् अधीतसर्वशास्त्राणामपि अनधीतमीमांसाशास्त्राणां तदधिकारिणां, शास्त्रसिद्धार्थानां मीमांसाशास्त्रसिद्धान्तीभूतपदार्थानां लेशेन सूक्ष्मतया वोधाय मीमांसाया वेदार्थविचारकशास्त्रस्य परिभाषां स्फुटार्थविवृतिं करोतीति मङ्गलार्थो दीप्यते । अत्र "अधिकारी च सम्बन्धो विषयश्च प्रयोजनम् ग्रन्थादावेव वक्तव्यमनुवन्धचतुष्टयम्" इति नियमात् अधीतवेदोऽधिकारी, मीमांसायास्स्फुटार्थ-विवरणं विषयः, सूक्ष्मबोधः प्रयोजनम्, प्रयोज्यप्रयोजकभावश्च सम्बन्धो ज्ञेयः ।

( १ ) परमकारुणिकेन महर्षिजैमिनिना 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अन्वाहार्य्ये च दर्शनाद्' इत्यन्ता द्वादशाध्यायी पूर्वमीमांसा प्रणीता। तत्र धर्मप्रमाणम् १, धर्माधर्मभेदौ २, शेषशेषिभावः ३, क्रत्वर्थपुरुषार्थभेदतः प्रयोज्यप्रयोजकविचारः ४, श्रुत्यर्थपाठादिक्रमबोधकप्रमाणानि ५, अधिकारविशेषः ६, सामान्यातिदेशः ७, विशेषातिदेशः ८, ऊहः ९, बाधः १०, तन्त्रम् ११, प्रसङ्गश्च १२, इति क्रमेण द्वादश लक्षणानि लक्षयतीति द्वादशलक्षण्यपि सोच्यते । लक्षयतीति लक्षणी टित्वाद्ङीप् द्वादशानां तेषां लक्षणी द्वादशलक्षणी द्वादशाध्यायीत्यर्थः । लक्षणान्यध्यायाः, द्वादशानां तेषां समाहारो द्वादशलक्षणीत्यपि केचित् ।

( २ ) यद्यपि 'धर्माधर्मावदृष्टं स्याद्' इति अदृष्टशब्दवाच्ययोः धर्मा-

धितेष्टसाधनताको(१)धर्म्मः। यथा यागादिः। वेदबोधितानिष्टसाध-
नताकोऽधर्म्मः। यथा (२)कलञ्जभक्षणादिः। तयोश्च वेदः, स्मृतिः,

धर्मयोः व्यापारतया यागादीनामुपादानम् "गङ्गास्नानादि-यागादि-
र्व्यापारस्तस्य कीर्तितः" इति नैयायिकनये विद्यते। तथापि मीमांसकानां
सिद्धान्ते याग-होम-दानानामेव धर्मत्वात् कलञ्जभक्षणादीनाञ्चाधर्मत्वा-
त्तयोरनुष्ठानोपयोगित्वं सिध्यत्येव।

अत एव तत्र धर्माधर्मौ यागकलञ्जभक्षणादिरूपौ अनुष्ठानस्य कर्त-
व्यस्य उपयोगितया योग्यतया विचारितौ प्राधान्येनेति शेषः।

मीमांसकेष्वपि प्राभाकरास्तु नैयायिकवदेव यागजन्यमपूर्वमेव धर्मं
संगिरन्ते-तथाहि-तन्मतेन कारिका-

विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म उच्यते।

परन्तु भाष्यकार-वार्तिककार-पार्थसारथिमिश्रमाधवाचार्य्यादिभिर्यागा-
देरेव धर्मत्वं व्यवस्थापितम् तथाहि—योहि यागादिकमनुतिष्ठति तं धार्मिक
इति समाचक्षते। न केवलं लोके, वेदेऽपि "यज्ञेन यज्ञमयजन्त देवास्तानि
धर्माणि प्रथमान्यासन् इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति" इति
भाष्यभणितिः।

"द्रव्यगुणक्रियादीनां धर्मत्वं स्थापयिष्यते" इति भट्टपादैरपि श्लोकवा-
र्तिके तथैवोक्तम्।

(१) वेदेन बोधिता इष्टसाधनता यस्येति विग्रहेण "स्वर्गकामो यजेत"
इत्यत्र यागेन स्वर्गरूपं इष्टं साधयेदित्यर्थे यागस्य इष्टसाधनता वेदात् प्रती-
यत एवेति यागरूपे धर्मे लक्षणसमन्वयः। भोजनादावतिव्याप्तिवारणाय-
वेदेति, स्वर्गादावतिव्याप्तिवारणाय इष्ट साधनतेति।

( २ ) कलञ्जं = तम्बाकू इति लोकप्रसिद्धः पदार्थः, विषलिप्तशरदिग्ध
मृगमांसं चोच्यते। रक्तलसुनमिति प्रामाणिकाः।

आचारश्च प्रमाणम् (१) । तत्र वेदः स्वतन्त्रं प्रमाणम्, इतरौ तु वेदमूलकतया ।

## वेद–द्वैविध्यम् ।

तत्र वेदो द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति । तत्र प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते(२) । प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः । विधायकं(३) वाक्यं ब्राह्मणम् । (४)तच्छेषोऽर्थवादः । तस्य विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यमिति वक्ष्यते(५) ।

## ब्राह्मणवाक्यभेदाः ।

तच्चानेकविधम्—कर्मोत्पत्तिवाक्यम्, गुणवाक्यम्, फलवाक्यम्, फलाय गुणवाक्यम्, सगुणकर्मोत्पत्तिवाक्यमित्यादि(६)भेदात् ।

---

(१) इह वेदस्मृति सदाचाराणामेव धर्माधर्मयोः प्रामाण्योपादानाद्

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥

इत्यत्र—चतुर्थस्य स्वात्मप्रियत्वस्यापि धर्मत्वविधानं नासङ्गतं ज्ञेयम् 'अतिरात्रे षोडशिनं गृह्णाति' । 'नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोति' 'अनुदिते जुहोति' इत्यादि विकल्पस्थले स्वात्मप्रियत्वस्य इहापि ग्राह्यत्वात् । एतादृशविकल्पस्थले एव स्वात्मप्रियत्वस्य तत्रापि पद्ये विधानं बोध्यम्, अन्यथा विरोधोऽपरिहार्य्यः स्याद् इति दिक् ।

( २ ) प्रयोगसमवेतार्थस्मारका मन्त्रा इति मन्त्रनिरूपणप्रस्तावे ।

( ३ ) कर्तव्यताबोधकमित्यर्थः ।

( ४ ) विधायकवाक्यरूपब्राह्मणाङ्गमेवार्थवादो न पृथगित्यर्थः ।

( ५ ) अर्थवाद–निरूपणक्रमेण ।

( ६ ) आदिपदात् सफलकर्मोत्पत्तिवाक्यमिति ज्ञेयम् ।

## कर्मोत्पत्ति-वाक्यम्।

तत्र येन वाक्येन-'इदं कर्म्म कर्त्तव्यम्' इति बोध्यते तत् कर्मोत्पत्तिवाक्यम्। यथा-"अग्निहोत्रं जुहोति" इति। अत्राग्निहोत्र-होमः कर्तव्यतया विधीयत इति कर्मोत्पत्तिवाक्यमिदम्।

## गुण-वाक्यम्।

विहिते कर्म्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुण-वाक्यम्। यथा-"दध्ना जुहुयात्" इति। अत्र होममुद्दिश्याङ्गतया दधि विधीयते इति गुणवाक्यमिदम्। कर्म्माङ्गतया विहितत्वमेव दध्यादेर्गुणत्वम्। अत्र होमस्योद्देश्यत्वं नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्देश्यत्वम्। तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्वमनुवाद्यत्वम्, दध्यादिगुणान्वयितया प्राधान्यञ्च। दध्यादेर्मानान्तराप्राप्तत्वादत्रैव विधेयत्वम्, होमसाधनत्वाच्च होमापेक्षया गुणत्वम्, पुरुषेणानुष्ठीयमानत्वाच्चोपादेयत्वञ्च(१)। अत्र मानान्तरप्राप्तत्वं मानान्तरज्ञातत्वम्, अप्राप्तत्वञ्चाज्ञातत्वमिति बोध्यम्।

## फलवाक्यम्।

(२)उत्पन्नस्य कर्म्मणः फलाकाङ्क्षायां फलसम्बन्धबोधको विधिः फलविधिः। यथा-"अग्निहोत्रं जुहुयात् स्वर्गकामः" इति।

अत्र 'यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेत्-कुर्यात्' इति अग्निहोत्रवाक्योत्पन्नस्य कर्म्मणः फलसम्बन्धो बोध्यत इति फलवाक्यमिदम्।

---

(१) मीमांसकानामियं सरणिर्विद्यते यद् यत्र प्रधाने उद्देश्यत्वमनुवाद्यत्वं प्राधान्यं स्वीकुर्वन्ति तत्रैवाङ्गे विधेयत्वमुपादेयत्वं गुणत्वञ्चामनन्तीति तदेवोभयं त्रिकमिह सलक्षणं निर्दिष्टं विद्यते।

(२) उत्पत्तिवाक्यविहितस्य।

## फलाय गुणवाक्यम् ।

प्राप्तं कर्म्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यम् । यथा—"दध्नेन्द्रियकामस्य जुहुयात्" इति । अत्राग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते—'होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेत्' इति । होमाश्रितेन होमकारकीभूतेनेत्यर्थः । अयमेव गुणफलविधिः गुणकामविधिरिति च उच्यते ।

## सगुणकर्मोत्पत्ति-वाक्यम् ।

द्रव्यदेवतादिगुणकर्म्मविधायकं वाक्यं सगुणकर्मोत्पत्तिवाक्यम् । यथा—"सोमेन यजेत" इति । अत्र सोमलताविशिष्टो (१)यागो विधीयते । विशिष्ट(२)विधावपि विशेषणस्य अर्थाद्विधिः ।

## सफलकर्मोत्पत्ति-वाक्यम् ।

क्वचित् कर्मोत्पत्तिवाक्यमेव फलसम्बन्धबोधकमपि भवति । यथा—"उद्भिदा यजेत पशुकामः" इति । अत्रोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशुफलाय विधीयते इत्येकमेवेदं वाक्यं फल(३)साधनयागविधायकम् ।

---

(१) सोमवता यागेन इष्टं भावयेदित्यर्थेन 'सोम' पदे मत्वर्थलक्षणया 'सोमो गुणः यागश्चापूर्वः' इत्युभयमप्यनेनैव 'सोमेन यजेत' इति वाक्येन विधीयते इति न वाक्यभेददोषः ।

(२) सोमविशिष्टयागविधानाद्विशिष्टविधिरप्ययमुच्यते ।

(३) फलस्य साधनतया यागस्य विधायकमित्यर्थः । केवलं याग एव न विधीयते किन्तु फलसाधनताविशिष्टो यागो विधीयते इति भावः ।

## (१)प्रयोगविधिः ।

प्रधान(२)विधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नः सन् सर्व्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिरित्युच्यते। यथा—"अग्निहोत्रं जुहुयात् स्वर्गकामः" इति । अत्र 'अग्निहोत्र-होमेन स्वर्गं भावयेत्' इत्यर्थः प्रतीयते । भावयेत्—उत्पादयेत् इति यावत् । अत्र 'कथमनेन होमेन स्वर्गं कुर्य्याद्' इति कथम्भावा-काङ्क्षा जायते । यथा—'कुठारेण द्वैधीभावं कुर्यात्' इत्युक्ते भव-त्याकाङ्क्षा 'कथमनेन 'द्वैधीभावं कुर्याद्' इति । तत्रोद्यमननिपात-नादिसहायेन इति गम्यते । तद्वदत्रापि "अग्निं (३)प्रणयति" अग्निषु समिध आदधाति" इत्याद्यङ्गविधिविहितप्रणयनसमिदा-धानायतनशोधनादिकाङ्गकलापजनितोपकारसहितेन अग्निहोत्रहोमेन स्वर्गं कुर्यात् इति प्रकरणकल्पितेन महावाक्येन स्वर्गाय साङ्गा-ग्निहोत्रप्रयोगो विधीयते इत्येतादृशः प्रयोगविधिः । अङ्गजातमेवेत्थ-

---

( १ ) मीमांसाशास्त्रे उत्पत्तिविनियोगाधिकारप्रयोगविधिभेदतश्चत्वा-रो विधयो निर्दिष्टाः । इह तु यद्यपि कर्मोत्पत्तिवाक्यादिपञ्चभेदास्तद्भिन्ना एव निर्दिष्टाः दृश्यन्ते, परन्तु तेषां विधीनामिहोक्तानां ब्राह्मणवाक्यानाञ्च परस्परं साम्यादवशिष्टं प्रयोगविधिमेवैकं लक्षयति—साम्यन्तु यथा—कर्मोत्पत्तिवाक्यं, सगुणकर्मोत्पत्तिवाक्यं, सफलकर्मोत्पत्तिवाक्यञ्चोत्पत्तिविधिरेव । गुणवाक्यं, फलाय गुणवाक्यन्तु विनियोगविधिः । फलवाक्यञ्चाधिकारविधिः । इत्येवं ज्ञेयम् ।

( २ ) प्रधानविधिरुत्पत्तिविधिरेव अङ्गविधिभिः गुणविधिफलविधि-प्रभृतिभिरेकवाक्यतामुपेत्य प्रयोगविधित्वमाश्रयतीति तदर्थः ।

( ३ ) गार्हपत्यादाहवनीयदेशं प्रत्यग्निं प्रापयति ।

स्भाव इति, (१)इतिकर्त्तव्यता इति च उच्यते। अत्राग्निहोत्रहोमः प्रधानं प्रणयनादिकं सर्व्वम् अङ्गम्।

## फलापूर्वकल्पना।

(२)नन्विदमनुपपन्नम्। (३)आशुतरविनाशिनां कर्म्मणां कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरिति(४) चेन्मैवम्। विहितकर्म्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्म्मणां कालान्तरभाविफलसाधनत्वोपपत्त्यर्थमन्तरा पुण्यपापरूपमपूर्वं(५) कल्प्यते। ततश्च यागादेरपूर्वद्वारा स्वर्गसाधनत्वं, न साक्षात्।

---

(१) कर्तव्यस्य इतिप्रकार इतिकर्तव्यता।

(२) अग्निहोत्रं जुहुयात् स्वर्गकाम इति यदुक्तं तन्न सम्भवतीति शङ्कते 'ननु' इति 'इदं' अग्निहोत्रादेः स्वर्गसाधनत्वम्।

(३) अनुपपत्तिमेव प्रकटयति 'आशिवति–तृतीयक्षणवृत्तिध्वंसप्रतियोगिनाम्।

(४) अग्निहोत्रादेः स्वर्गसाधनत्वमनुपपन्नं कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरित्युक्तौ प्रथमान्तपदोपस्थाप्यतावच्छेदकस्य साध्यत्वेन स्वर्गसाधनतानुपपत्तिरूपसाध्येन सह स्वर्गादिफलसाधनतानुपपत्तिरूपस्य हेतोरभेद इति साध्याविशिष्टरूपहेतुदोषो नाशङ्कनीयः। विशेषणभेदेन विशिष्टभेदस्य सर्वसम्मततया अग्निहोत्रनिष्ठस्वर्गादिसाधनत्वानुपपत्तिरूपसाध्याद् आशुतरविनाशिकर्मनिष्ठस्वर्गफलसाधनत्वानुपपत्तिरूपस्य हेतोर्भिन्नत्वात्।

(५) पुण्यपापात्मकापूर्वकल्पनया पापस्य प्रायश्चित्तनाश्यत्वं पुण्यस्य कर्मनाशाजलस्पर्शादिनाश्यत्वमपि सङ्गच्छते कर्मध्वंसस्यैव फलजनकत्वमते तु ध्वंसस्य नित्यत्वात् तन्नाशोऽशक्य एवेति प्रायश्चित्तादि विधानमनर्थकं स्यादिति सुधीभिर्विमर्शनीयम्।

तदेव फलापूर्वम्। तत्करणत्वञ्च प्राच्योदीच्याङ्गविशिष्टस्य(१) प्रधानस्य भवति, न प्रधानमात्रस्य। प्रधानमात्रादेव फलापूर्वजनने फलस्यापि तत एव सिद्धेरङ्गानामानर्थक्यापत्तेः(२)।

## उत्पत्त्यपूर्वकल्पना।

ननु सर्व्वाङ्गविशिष्टस्यापूर्वजनकत्वमुक्तम्। तच्चाशुतरविनाशिनः प्रधानस्याङ्गसाहित्याभावान्न(३) सम्भवतीति चेन्न। प्रधानकर्म्मणः (४)स्वरूपेणाङ्गसाहित्याभावेऽपि (५)उत्पत्त्यपूर्वद्वारा साहित्यसम्भवात्। (६)प्रधानस्य सर्वाङ्गसाहित्यसिद्ध्यर्थं प्रधानकर्म्मपरमापूर्वयोर्मध्ये प्रधानमात्रजन्यमुत्पत्तिनामकं किञ्चिदपूर्वमस्तीत्यङ्गीकारात्। एवमङ्गानामपि परस्परसहितानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्याभावात् (७)तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं बोध्यम्। अङ्गप्रधानयोरुपकार्य्योपकारकभावः अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजननसामर्थ्योन्मुखीकरणमेव। दर्शपूर्णमासयोस्तु वि-

---

(१) प्रधानहोमातः पूर्वमनुष्ठेयमङ्गं प्राच्यम् तदनन्तरं विधेयमङ्गमुदीच्यम्।

(२) अङ्गानां प्रकरणपाठवैयर्थ्यापत्तेः।

(३) ध्वस्तानां प्राच्याङ्गानां प्रधानसाहित्यं ध्वस्तस्य प्रधानस्य उदीच्याङ्गसाहित्यं न सम्भवतीत्यर्थः।

(४) साक्षात्। (५) यागजन्योत्पत्त्यपूर्वं द्वारीकृत्येत्यर्थः।

(६) तदेवोत्पत्त्यपूर्वं दर्शयति।

(७) तेषां तेषां प्राचीनानामङ्गानां स्व-स्वोत्पत्त्यपूर्वं द्वारीकृत्येत्यर्थः।

शेषः(१)। "यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति" इत्याग्नेययागो विहितः, "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे (२)प्रायच्छद्" इत्यग्नीषोमीययागो विहितः, "उपांशुयाजमन्तरा यजति" इति उपांशुयाजः "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति वाक्यात् पौर्णमास्यां विहितः(३)। एतानि पौर्णमास्यां प्रधानानि। एषामाग्नेयाग्नीषोमीयोपांशुयागानां तत्तद्वाक्यावगतपौर्णमासीकालसम्बन्धं निमित्तीकृत्य "य एवं विद्वान् पौर्णमासीं यजते" इति विद्वद्वाक्ये(४) पौर्णमासीपदेन एकवचनान्तेन समुदायरूपेणानुवादः(५)। तेन(६) वेदे यत्र यत्र पौर्णमासीशब्दः तत्र तत्राग्नेयादिसमुदायोपस्थितिः।

---

(१) त्रिकात् त्रिकाद् एकमपूर्वमुत्पद्यत इति तत्र वैशिष्ट्यम्।

(२) प्रायच्छदिति कालपरिणामेन धातुपरिणामेन च विदध्यादिस्यर्थो बोध्यः।

(३) 'तौ अग्नीषोमौ अब्रूतां नौ आवयोः पौर्णमास्याम् उपांशु यजन् आज्यस्यैवेति'। अग्नीषोमदेवताक आज्यद्रव्यकः पूर्णमासीकालिक इत्यर्थः।

(४) विद्वच्छब्दान्वितवाक्ये इत्यर्थः।

(५) प्रमाणान्तरप्राप्तस्य पुनःकथनमनुवादः।

(६) तादृशानुवादप्रयोजनं दर्शयति–वेदे, नतु स्मृत्यादिलोके इत्यर्थः, तत्र तु पौर्णमासी दर्शशब्दाभ्यां पूर्णिमामावास्ये तिथी गृह्येते। यत्र यत्र पौर्णमासीशब्दो दर्शशब्दश्च अभेदेन यागान्वितार्थो दृश्यते तत्र तत्र पौर्णमासी कर्तव्यत्वरूपेण दर्शकर्तव्यत्वरूपेण च लक्षणया आग्नेयादिसमुदाय-

## यजिपदाश्रवणेऽपि यागविधानम् ।

ननु "यदाग्नेयं" इति वाक्ये यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति चेन्नैवम् । अग्निर्देवता अस्य पुरोडाशस्य इत्यर्थे विहितदेवतातद्धितान्त आग्नेयशब्दः । तस्य पुरोडाशपदसामानाधिकरण्याद् द्रव्यदेवतासम्बन्धोऽवगतः । स यागमन्तरा न सम्भवति, द्रव्यदेवतासम्बन्धस्य यागादन्यत्र क्रियायामसम्भवात्, इति यागक्रियायामेव सम्बन्धो वाच्यः । देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात् । अतः श्रुतद्रव्यदेवतासम्बन्धानुमितो यागो यजेतेति कल्पितेन पदेन विधीयते—अग्निदैवत्यपुरोडाशद्रव्यकामावास्यादिकालकर्त्तव्ययागेन इष्टं भावयेदिति । एवं यत्र यत्र द्रव्यदेवतासम्बन्धमात्रं श्रूयते, "सौर्य्यश्चरुं निर्वपेत्" इत्यादौ, तत्र सूर्यदेवतादिसम्बन्धानुमितो यागो विधीयते इति न कश्चि(१)द्दोषः ।

## लिङ्प्रत्ययाद्यभावेऽपि विधिकल्पना ।

ननूपांशुयागवाक्ये यजेः श्रवणेऽपि विधिप्रत्ययलिङ्गादेरभावात् कथं विधायकत्वमिति चेन्नैवम् । यजतीत्यस्य यजेतेति विपरिणामेन विधायकत्वसम्भवात् । एवं "व्रीहीन् प्रोक्षति" "समिधो यजति" इत्यादावपि विपरिणामो बोध्यः ।

केचित्तु यजतीत्यस्य पञ्चमलकारत्वाङ्गीकारात् विधायकत्वसम्भव इत्याहुः ।

तथा—"ऐन्द्रं दध्यमावास्यायाम्" "ऐन्द्रं पयोऽमावास्यायाम्" इतिवाक्यविहितौ सान्नाय्ययागौ,(२) "यदाग्नेय इति वाक्य-

---

स्योपस्थितिरिति वाक्यार्थः । इत्थञ्च "पौर्णमास्यां पौर्णमास्या यजेत" इति वाक्ये प्रथमपौर्णमासीपदस्य तिथिवाचकत्वं तत्पदार्थस्य यागेऽनन्वयात् ।

(१) यागविधायकत्वाभावरूपः । (२) दधिपयोयागावित्यर्थः ।

विहिताग्नेयश्चामावास्यायां प्रधानानि(१) ।

एषां त्रयाणां "य एवं विद्वानमावास्यां यजते" इति वाक्ये अमावास्यामिति नाम्ना द्वितीयैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र दर्शशब्दोऽमावास्याशब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः । त्रिकस्य त्रिकस्यामावास्यापौर्णमासीशब्दाभ्यां समुदायरूपेण विद्वद्वाक्येऽनुवादस्य प्रयोजनन्तु "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ द्विवचनोपपत्तिः । अन्यथा षण्णामाग्नेयादियागानां बहुत्वाद्दर्शपूर्णमासैरिति बहुवचनं स्यात् । मानान्तरेण प्राप्तार्थस्य पुनः श्रवणमनुवादः ।

तथा फलवदाग्नेयादिसन्निधौ आम्नातानि प्रयाजाज्यभागानुयाजादीनि षण्णां यागानामङ्गभूतानि ।

## त्रिकापूर्वाद्युत्पत्तिः ।

एवं स्थिते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यस्यायमर्थः—दर्शपूर्णमासाभ्यां समुदायाभ्यां परस्परसहिताभ्यां स्वर्गापूर्वं कुर्यादिति । तत्र कथं कालद्वयवर्त्तिनोः समुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्रिकादेकैकमपूर्वं जायते, तद्द्वारा द्वयोः समुदाययोः साहित्यमुच्यते । एकैकस्य त्रिक-

(१) इमानि च प्रधानानि तैत्तिरीयेषु हिरण्यकेश्यादीनां सोमेनेष्टवतामनुष्ठेयानि बोध्यानि । सोमेन अनिष्टवतां तेषान्तु उक्तसान्नाय्ययागयोः स्थाने ऐन्द्राग्नपुरोडाशयाग एवानुष्ठेयः । उपांशुयाजो हिरण्यकेश्यादीनां नास्त्येव तैत्तिरीयेषु बौधायनानान्तु पौर्णमासेऽग्नीषोमीयपुरोडाशयागानुष्ठानं नास्ति । कात्यायनाश्वलायनादीनान्तु 'आग्नेयः' 'उपांशुयागः' अग्निषोमीयः' इति त्रिकं पौर्णमास्यां 'आग्नेयः' 'उपांशुयाजः' ऐन्द्राग्नश्चेति त्रिकममावास्यायाम् ।

स्यापि त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानुयाजादिपूर्वोक्त-राङ्गकलापविशिष्टस्य एकैकस्य त्रिकस्य समुदायापूर्वजनकत्वमुच्यते । एकैकत्रिकस्य सर्वाङ्गसाहित्यं स्वरूपेण न सम्भवतीति त्रिभिर्यागैस्त्रीण्युत्पत्त्यपूर्वाणि जायन्ते तद्द्वारा सर्वाङ्गसाहित्यम् । अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधानसाहित्याभावात् तदुत्पत्त्यपूर्वद्वारा साहित्यं वाच्यम्, तथा च प्रधानजन्योत्पत्त्यपूर्व्वाणां प्रयाजादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति तदेव प्रधानानामङ्गविशिष्टत्वरूपं साङ्गत्वम् । एवञ्च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रयाजादिजन्योत्पत्त्यपूर्व(१)सचिवैः समुदायापूर्वमेकं जन्यते, तथा दर्शेऽपि आग्नेयेन्द्रद्वयजन्यैस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं त्रिकापूर्वं जन्यते, (२)ताभ्यां त्रिकापूर्वाभ्याम् (३)आग्नेयाद्युत्पत्त्यपूर्वत्रितयजन्याभ्यां, फलजनकीभूतं महापूर्वं फलापूर्वनामकं जन्यते, ततश्च फलमिति । तथा च सर्वाङ्गोपकृताभ्यां दर्शपूर्णमासाभ्यामपूर्वद्वारा स्वर्गं कुर्य्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधानकर्त्तव्यताबोधको विधिः प्रयोगविधिरिति सिद्धम् ।

## विधित्रैविध्यम् ।

पुनरपि विधिस्त्रिविधः(४) । अपूर्वविधिः, नियमविधिः, परिसङ्ख्याविधिश्चेति ।

---

(१) सहायैः । (२) उक्ताभ्याम् ।

(३) आग्नेयादीनाम् आग्नेयोपांशवग्नीषोमीययागानामाग्नेयेन्द्रदधीन्द्रपयोयागानाञ्च ये उत्पत्त्यपूर्वत्रितये ।ताभ्यां जन्ये उत्पद्यमाने ये त्रिकापूर्वे ताभ्यामित्यर्थः.। फलतः—पौर्णमासीकर्तव्याग्नेयादित्रयजन्यापूर्वत्रयादङ्गोत्पत्त्यपूर्वसहितात् यत् त्रिकापूर्वमेकं जायते । यच्च दर्शकर्तव्याग्नेयादित्रयजन्यापूर्वत्रयादङ्गोत्पत्त्यपूर्वसहितात् त्रिकापूर्वमेकं जायते ताभ्यां त्रिकापूर्वद्वयाभ्यामित्यर्थः ।

(४) पूर्वं ब्राह्मणवाक्यानां पञ्चधा विभागः कृतः पुनरिह प्रकारान्तरेण

## अपूर्वविधिः ।

तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति सोऽपूर्वविधिः । यथा दर्शपूर्णमासप्रकरणे "व्रीहीन् प्रोक्षति" इति । एतद्विध्यभावे दर्शपौर्णमासीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति । एतद्विधिसत्त्वे तु तत्सम्बन्धिव्रीहिषु प्रोक्षणं प्राप्नोत्येव इति अत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः ।

## नियमविधिः ।

यश्च पक्षे प्राप्तमर्थं नियमयति स नियमविधिः(१) । यथा तत्रैव "व्रीहीनवहन्ति" इति । एतद्विध्यभावे दर्शपौर्णमासिकेषु व्रीहिपूत्पत्तिवाक्यावगतपुरोडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्य-कार्याय अवहननवत् कदाचिन्नखविदलनमपि प्राप्नुयात् इति तस्मिन् पक्षेऽवहननस्य प्राप्तेरभावात् कार्य्यान्यथोपपत्तेरवहनस्य पाक्षिकी प्राप्तिः स्यात् । सति त्वस्मिन् विधाववहननेनैव वैतुष्यं कार्य्यमिति नियमे सति विदलनं सर्वात्मना निवर्त्तत इति ,नियमविधिरयम् ।

नच वैतुष्यस्य नखविदलनेनापि सम्भवात् अवहननियमो व्यर्थः प्रयोजनाभावादिति वाच्यम् । अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जन्यते इति नियमादृष्टाङ्गीकारात् । नियमेन दृष्टकार्य्यालाभेऽपि अदृष्टस्योत्पत्तेः । तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलाऽपूर्वे उपयुज्यते,

---

विभागत्रयमाह अपूर्वं० इत्यादि । अत्र प्राचीनानां कारिकाऽप्यस्ति—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

(१) नानासाधन-साध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापकः ।

तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यते इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम् । एवं (१)सोमादिनियमेऽपि बोध्यम् ।

## परिसंख्याविधिः ।

द्वयोः समुच्चित्य(२) प्राप्तावितरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः । यथा चयनप्रकरणे **"इमामगृभ्णन् रशनामृतस्य(३) इत्यश्वाभिधानीमादत्ते"** इत्यश्वरसनाग्रहणाङ्गत्वेन मन्त्रविधिः । एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रो रशनाऽऽदानप्रकाशनसामर्थ्यरूपात् लिङ्गात् अश्वरशनाऽऽदाने इव गर्दभरशनाऽऽदानेऽपि नियमेन प्राप्नुयात् । सत्यस्मिन् विधौ अनेन मन्त्रेण अश्वरशनामेवाददीत न तु गर्दभरशनाम्, सा तु तूष्णीमेव ग्राह्येति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलकत्वादयं परिसङ्ख्याविधिः(४) । एवं "पञ्च(५) पञ्चनखा भक्ष्या" इत्यादावपि बोध्यम् ।

---

( १ ) सोमे न यजेत व्रीहिभिर्यजेत इत्यत्र ।

( २ ) परिसंख्यां लक्षयति—द्वयोः समुच्चित्येत्यादि—अविशेषेण उभयत्र प्राप्तौ, इतरनिवृत्तिफलक इत्यर्थः ।

( ३ ) ऋतस्य यज्ञस्य ( प्रारम्भे ) अगृभ्णन् गृहीतवन्त इत्यर्थः ।

( ४ ) परिसंख्यानियमविध्योर्विषयभेदस्तु एवं ज्ञेयः, तथाहि—नियमे विधिप्राप्तस्यार्थस्य पाक्षिकी प्राप्तिः । यथाविधिना प्राप्तस्य तण्डुलनिष्पादकस्यावहननस्य नखविदलनादिना सम्पादिततण्डुलादावप्रवृत्तिः । सतुपधान्ये एव प्रवृत्तिः । परिसंख्यायास्तु उभयत्रैव समाना प्राप्तिः यथा 'इमामगृभ्णन् रशनामृतस्य' इत्यत्र रशनादानप्रकाशलिङ्गादश्वरशनादाने गर्दभरशनादाने च समानैव रशनाग्रहणार्थप्रकाशकस्य मन्त्रस्य प्राप्तिरिति परिसंख्यया गर्दभरशनाग्रहणं निवार्यत इति इतरनिवृत्तिपरको विधिः परिसंख्येति संगच्छते ।

(५) शशकः शल्यको गोधा खड्गी कूर्मोऽथ पञ्चमः इति पूर्वार्द्धो भागः ।

## श्रुत्यादि षड्प्रमाणानि ।

(१)पूर्वं दर्शपूर्णमासाङ्गत्वं प्रयाजादीनामुक्तम्। तत्राङ्गत्वबोधकप्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभेदेन षट्।

## श्रुतिः ।

तत्र "दध्ना जुहुयात्" इत्यत्राग्निहोत्रवाक्यप्राप्तं होमं जुहुयादित्यनेनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या दधि विधीयते इति श्रुत्या(२) दध्नोऽङ्गत्वम्।

## लिङ्गम् ।

लिङ्गं नाम सामर्थ्यम्। तच्च द्विविधम्–अर्थगतं शब्दगतञ्चेति। आद्यं यथा–"स्रुवेणावद्यति" इत्यवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपात् लिङ्गात् आज्यसान्नाय्यादिद्रवद्रव्यस्यावदानविशेषाङ्गत्वम्। स्रुवेण पुरोडाशाद्यवदानस्य कर्त्तुमशक्यत्वात्।

शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम्। यथा–"अग्नये त्वा जुष्टं निर्वपामि" इति मन्त्रस्य निर्वापप्रकाशनसामर्थ्यरूपात्

---

"पञ्च पञ्चनखा भक्ष्याः" इदं हि वाक्यं न पञ्चपञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् नापि नियमपरं पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् अत इदं अपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः।

(१) अङ्गत्वबोधक प्रमाणाभिधानार्थमुपोद्घातसङ्गतिं ब्रूते पूर्वमित्यादिना–तथा च–'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा' इति लक्षणम्।

(२) अङ्गत्वघटक-कारकत्वस्य साक्षाद्बोधकं प्रमाणं श्रुतिरिति तल्लक्षणं ज्ञेयम्। केचित्तु श्रुतिर्हि स्वतो विनियोजिकेति ग्रन्थकृतैवाग्रे वक्ष्यते तेनान्यानपेक्षविनियोजकत्वमिति श्रुतिलक्षणं प्राप्तमेवेति न लक्षणान्तरं कृतम्। इत्याहुः।

लिङ्गान्निर्वापाङ्गत्वम्। यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम्।

## वाक्यम्।

पदान्तरसमभिव्याहारो वाक्यम्। यथा—"इषे त्वेति छिनत्ति" इति। अत्र छेदनाङ्गत्वेन "इषे त्वा" इति मन्त्रो वाक्येन विधीयते। यद्वा "अग्नये जुष्टम्" इत्यत्रैव अग्नये जुष्टमित्यादिपदानां निर्वपामीत्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम्।

## प्रकरणम्।

प्रकरणं नाम परस्पराकाङ्क्षा। यथा—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति दर्शपूर्णमासाभ्यां स्वर्गापूर्वं कुर्य्यादित्युक्ते भवत्याकाङ्क्षा कथमाभ्यां स्वर्गापूर्वं कर्त्तव्यमिति। तथा फलवदाग्नेयादिसन्निधौ "समिधो यजति" "तनूनपातं यजति" "आज्यभागौ यजति" इत्यादिभिः प्रयाजादयः फलरहिताः श्रुताः, तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजनमिति। ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपौर्णमासयोः कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपौर्णमासाङ्गत्वं निश्चीयते।

## स्थानम्।

स्थानं नाम सन्निधिः। यथा सान्नाय्यपात्रसन्निधौ "शु(१)न्धध्वम्" इतिमन्त्रस्य पाठात् सन्निधानात् सान्नाय्यपात्रप्रोक्षणाङ्गत्वम्।

(१ 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इतिमन्त्रस्वरूपम्।

## समाख्या ।

समाख्या संज्ञा । यथा अध्वर्युकाण्डप्रतिपादिते कर्म्मजाते आध्वर्यवसमाख्यावशात् अध्वर्य्योः कर्तृत्वेनाङ्गत्वम् । तथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशात् "उभा वामिन्द्राग्नी" इत्यादीनां याज्यानुवाक्यत्वेन विनियोगः । विनियोगो नाम अङ्गत्वेनान्वयः ।

## श्रुतिप्राबल्यविचारः ।

(१)श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यम्, उत्तरोत्तरस्य दौर्बल्यम् । यथा–"कदाचन स्तरीरसि (२) इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यग्निहोत्रप्रकरणे श्रूयते । तत्र मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यरूपात् लिङ्गात् इन्द्रोपस्थानाङ्गत्वे प्राप्ते, ऐन्द्र्या इति तृतीयाश्रुत्या गार्हपत्यमिति द्वितीयाश्रुत्या च गार्हपत्योपस्थानाङ्गत्वेन विधानात् लैङ्गिक इन्द्रोपस्थाने विनियोगो बाध्यते । श्रुतिर्हि स्वतो विनियोजिका । लिङ्गन्त्विन्द्रप्रकाशनसामर्थ्यमालोच्य ऐन्द्रथे-

---

(१) श्रुति–लिङ्ग वाक्य–प्रकरण–स्थान समाख्यानां पारदौर्बल्यमर्थं विप्रकर्षादिति जैमिनीयं सूत्रम् ।

'श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि ।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या"
इति संक्षिप्तं क्वापि ।

(२) 'नेन्द्र सश्चसि दाशुषे' इत्यवशिष्टो मन्त्रः । हे इन्द्र कदाचन कदाचिदपि न स्तरीरसि न घातुको भवसि । प्रत्युत दाशुषे आहुतिं दत्तवते यजमानाय सश्चसि प्रीयसे इत्यर्थः

न्द्रमुपतिष्ठते' इति श्रुतिकल्पनाद्वारा विनियोजकमिति वाच्यम् । तच्चात्र न सम्भवति ।(१)

यत्र श्रुतिविनियोगो नास्ति "अग्नये जुष्टं निर्वपामि" इत्यादौ, तत्र मन्त्रस्य निर्वापप्रकाशनसामर्थ्यमालोच्य 'अनेन मन्त्रेण निर्वापं कुर्यात्' इति श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं भवत्येव । श्रुतिकल्पनाप्रतिवन्धकाभावात् ।

## लिङ्गादिप्राबल्यविचारः

तथा २"स्योनन्ते सदनं कृणोमि" "तस्मिन् सीद" इत्यत्र तस्मिन्निति तच्छब्दस्य पूर्ववाक्यार्थसापेक्षतया एकवाक्यत्वभानात् वाक्यप्रमाणेन द्वयोरेकमन्त्रत्वं भाति, लिङ्गेन भिन्नमन्त्रत्वं भाति । आद्यस्य सदनप्रकाशनसामर्थ्यात्, "तस्मिन् सीद" इत्यस्य सादनप्रकाशकत्वात् । तत्र वाक्यापेक्षया लिङ्गस्य प्राबल्यात् वाक्यं बाधित्वा लिङ्गेन "स्योनन्ते" इत्यस्य सदनाङ्गत्वम्, "तस्मिन् सीद" इत्यस्य सादनाङ्गत्वमिति निर्णयः ।

"स्योनं त" इत्यस्य "तस्मिन् सीद" इत्यनेनैकवाक्यत्व-वलात् यथाकथञ्चित् सादनसामर्थ्यरूपं लिङ्गं कल्पयित्वा "अनेन

(१) प्रथम क्षणोपस्थिततया श्रुत्या बाधात् इति शेषः ।

(२) "स्योनन्ते सदनं कृणोमि घृतस्य धारया सुपेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान" इति सम्पूर्णो मन्त्रः । अस्यार्थः"भो पुरोडाश ते तव स्योनं समीचीनं सदनं स्थानं कृणोमि करोमि तच्च स्थानं घृतस्य धारया सुपेवं सुष्ठु सेवितुं योग्यं कल्पयामि । भो व्रीहीणाम् मेध ! सारभूत त्वं सुमनस्यमानः समाहितमनस्कः सन् तस्मिन् अमृते सदने सीद उपविश प्रतितिष्ठ स्थिरो भव" ।

विशिष्टमन्त्रेण सादनं कुर्य्याद्” इति श्रुतिः कल्पनीया । सदन-प्रकाशनरूपप्रत्यक्षलिङ्गेन कल्पितया “स्योनं त इत्यनेन सदनं कुर्याद्” इति श्रुत्या “स्योनन्त” इत्यस्य शीघ्रं सदने विनियोगे सति तेनैव मन्त्रस्य नैराकाङ्क्ष्यात् वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः।

एवं वाक्येन प्रकरणस्य, प्रकरणात् क्रमस्य, क्रमात्समाख्याया बाधो वेदितव्यः। तथा श्रुत्या वाक्यादेरपि बाधः। तदेवमङ्गता-बोधकप्रमाणानि श्रुत्यादीनि निरूपितानि ।

## अङ्गलक्षणम्

तच्चाङ्गत्वं शेषत्वं—पारार्थ्यमिति यावत्। परोद्देशेन प्रवृत्तकृति-व्याप्यत्वं पारार्थ्यम्(१)। प्रयाजादीनां दर्शपूर्णमासोद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वात् लक्षणसङ्गतिः। दर्शादेः प्रयाजाद्यु-द्देशेन प्रवृत्तकृतिविषयत्वाभावान्नातिव्याप्तिः केवलप्रयाजानुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः ।

## सन्निपत्योपकारकाङ्गम्

तान्यङ्गानि द्विविधानि सन्निपत्योपकारकाणि, आरादुपकार-काणि चेति। यान्यङ्गानि साक्षात्परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्(२)द्वारा तदुत्प(३)त्त्यपूर्वोपयोगीनि तानि सन्निपत्यो-

---

(१) परः प्रधानं कर्म तस्योद्देशेन उपकाराभिप्रायेण प्रवृत्तस्य पुरुष-स्य या कृतिः तद्व्याप्यत्वं तद्विषयत्वमित्यर्थः प्रयत्नसाध्यत्वमिति यावत्। परः अर्थः उपकार्यत्वेन प्रयोजनं यस्य सः परार्थस्तस्य भावस्तत्त्वमिति व्युत्पत्त्या तादृशार्थलाभः ।

(२) प्रधानयागशरीरनिष्पादनद्वारा ।

(३) प्रधानजन्योत्पत्त्यपूर्वसम्पादकानि ।

पकारकाणि। यथा(१)-व्रीह्यादिद्रव्याणि, तत्संयुक्तावहननप्रोक्षणादीनि, अग्न्यादिदेवतातत्संयुक्तयाज्यानुवाक्यावचनादीनि च। अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा, अवहननादेस्तुषविमोकादिरूपदृष्टद्वारा, व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं, तद्द्वारा यागशरीरतदुत्पत्त्यपूर्व्वोपयोगित्वञ्च। याज्यानुवाक्यादेर्देवतासंस्कारद्वारा देवतायाश्च साक्षाद्यागशरीरनिर्वर्तकत्वं तद्द्वारा तदुत्पत्त्यपूर्व्वोपयोगित्वञ्च। यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात्। द्रव्यदेवते हि यागस्वरूपमिति सिद्धान्ताच्च। एतान्येव सामवायिकानीत्युच्यन्ते।

## आरादुपकारकमङ्गम्।

आत्मसमवेतापूर्व्वजनकान्यारादुपकारकाणि। यथा-प्रयाजाज्यभागानुयाजादीनि। एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति, किन्त्वात्मगतमदृष्टं जनयन्ति इत्यारादुपकारकाणि।

## कर्मभेदविचारः।

तत्र सामान्यतः (२)कर्म्म द्विविधम्—अर्थकर्म्म, गुणकर्म्म चेति। तत्रात्मगतापूर्व्वजनकं कर्म्म अर्थकर्म्म। यथा-अग्निहोत्रदर्शपूर्णमासप्रयाजादिकम्।

गुणकर्म्म संस्कारजनकम्। तच्च द्विविधम्—उपयुक्तसंस्कारकम्, उपयोक्ष्यमाणसंस्कारकञ्च। तत्र उपयुक्तसंस्कारकं प्रतिपत्तिकर्म्म।

---

(१) द्रव्यक्रियादेवता मन्त्रभेदेन चत्वारि उदारहरणान्याह यथेत्यादिना—

(२) कर्तव्यताबोधक ब्राह्मणवाक्यानां भेदमुक्त्वा सम्प्रति तत्प्रतिपाद्यानां कर्मणां भेदमाह—तत्रेति, कर्म = ब्राह्मणवाक्यबोध्यं कर्मेत्यर्थः। सामान्यतः कर्मत्वजातिरूपेणेत्यर्थः।

उपयुक्तस्य आकी(१)र्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्ति-रिति लक्षणात्। यथा इडाभक्षणकृष्णविषाणाप्रासनचतुरवत्तहो-मादिकम्।

नन्वि(२)डाभक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्य-प्रक्षेपात्मकत्वात् प्रतिपत्तित्वं युक्तम्, होमस्य तु यागोपयुक्तद्रव्यसं-स्कारकत्वाभावात् कथं प्रतिपत्तित्वम्, होमस्य यागसमानकालीन-त्वेन होमसंस्कार्य्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेद्।

## प्रतिपत्तिकर्मस्वरूपम्।

अत्राहुः—उपयुक्तसंस्कार(३)मात्रं प्रतिपत्तिः, न तु प्रधानयागो-पयुक्तत्वम्। तथा सति पशोर्विशसनानन्तरं वपाहृदयाद्युद्धरणकाल-कर्त्तव्यलोहितशकृन्निरसनस्य प्रतिपत्तित्वाभावप्रसङ्गात्—यागोपयुक्त-द्रव्यप्रक्षेपरूपत्वाभावात्। तथा कृष्णविषाणाप्रासनस्यापि प्रति-पत्तित्वं न स्यात्, यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि(४) यागोप-युक्तत्वाभावात्। अतो यत्र क्वचनोपयोगमात्रं विवक्षितम्। यत्र

---

(१) विहितप्रयोजनस्येत्यर्थः मीमांसकानामयं संकेतः तथाहि—शास्त्रदीपिकायाम्—"कृतार्थमपि तु द्रव्यमाकीर्णकरमुच्यते" इति। द्रव्य स्य आकीर्णकरत्वं नाम तस्य प्रयोगनिर्वर्तनोत्तरं किञ्चिदकुर्वतोऽन्तरावस्थि-त्या कार्य्यकर्तॄणां सञ्चारादौ अन्तरायकर्तृत्वमेव।

(२) इडा = पुरोडाशखण्डः।

(३) उपयुक्तस्य संस्कारो यस्मादितिव्यधिकरणपदो बहुव्रीहिः।

(४) ज्योतिष्टोमे "कृष्णविषाणया कण्डूयति नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति" इति श्रूयते। अर्थस्तु यजमानेन दत्तां दक्षिणामादाय गतेषु ऋत्विक्षु स्वहस्तधृतं शिरःकण्डूयनोपयुक्तं कृष्णमृगशृङ्गं द्रव्यं चात्वालनामके गर्ते प्रक्षेप्तव्यम् इति। एवंस्थिते यागाङ्गभूतकण्डूय-

कचिदुपयोगस्त्वत्राप्यस्ति, वपाहृदयाद्युद्धरणेनोपयुक्तस्य पशोः सम्बन्धिनः शकृल्लोहितस्य आकीर्णकरस्य प्रतिपत्त्यपेक्षत्वात् । एवं यथाकथञ्चिदुपयोगो होमस्थलेऽप्यस्ति ।

## तद्भेदाः ।

तथाहि, प्रतिपत्तिस्त्रिधा—प्रधानोत्तरकाला, प्रधानसमकाला, प्रधानपूर्व्वकाला चेति । तत्र—आद्या इडाभक्षणादि(१)का । द्वितीया होमादिका । तथाहि-दर्शपूर्णमासप्रकरणे श्रूयते-"सकृदुपस्तृणाति" "द्विर्हविषोऽवद्यति" "सकृदभिघारयति" "चतुर(२)वत्तं जुहोति" । तत्र चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते, होमस्याप्राप्तत्वेनानुवादासम्भवात् ।

## यागहोमशब्दार्थविचारः ।

न च यदाग्नेयवाक्याद्धोमप्राप्तिः, तद्वाक्यस्य यागविधायकत्वात् । न च यागहोमयोरभेद इति वाच्यम् । देवतोद्देशेन द्रव्यत्यागस्य यागशब्दार्थत्वात्, प्रक्षेपविशिष्टस्य यागस्य होमशब्दार्थत्वात् । तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपस्य शक्त्याऽप्राप्तत्वेनानुवादासम्भवात् । किन्तूपस्तरणद्विरवदानाभिघारणवाक्यैः

---

नोपयुक्तत्वेऽपि साक्षात्प्रधानयागोपयुक्तत्वाभावात् कृष्णविषाणप्रासनस्यापि प्रतिपत्तित्वं न स्यादिति पूर्वेणान्वयः । अतो न साक्षात् यागोपयुक्तत्वं विवक्षितमिति भावः ।

(१) आदिशब्देन पुरोडाश संस्कारादि ज्ञेयम् ।

(२) सकृदुपस्तरणं द्विरवदानम्, सकृदभिघारणम् इति । समुदितमेतच्चतुष्टयं चतुरवत्तमुच्यते ।

प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कारत्वेन प्रक्षेपो(१) जुहोतीत्यनेन विधीयते। स च संस्कारः प्रतिपत्तिरूप एव। "अग्नये जुष्टमभिघारयामि" इत्यादिनिर्देशैर्यागाङ्गभूताग्न्यादिदेवतार्थतया यथाकथञ्चिदुपयुक्तस्य पुरोडाशस्य प्रतिपत्त्यपेक्षया तदवयवद्व्यव(२)दानकर्म्मकप्रक्षेपस्य प्रतिपत्तिकर्म्मत्वौचित्यात्।

स च संस्कारः प्रधानसमकालः। होमो हि "वषट्कृते जुहोति" इति विधानात्—वषट्कारोत्तरक्षणे अध्वर्युकर्त्तव्यः। यागोऽपि तस्मिन्नेव क्षणे, यागस्य स्मरणार्थेन वषट्कारेण स्मारितः सन् यजमानेनानुष्ठेय इति तयोर्यौगपद्यसम्भवात्। तदिदं सर्व्वप्रदानाधिकरणवार्त्तिके स्थितम् ( पू० मी० अ० ३। पा० ४। अधि० १४ सू० ३७ )।

प्रधानपूर्व्वकाला प्रतिपत्तिः यथा—"शकृत्सम्प्रविध्यति" "लोहितं निरस्यति" इति शकृत्संप्रवेधनलोहितनिरसने। इदमपि "पशावनालम्भात् लोहितशकृतोरकर्मत्वम्" इत्यधिकरणे ( पू० मी० अ० ४ पा० १ अधि० १२ सू० २७ ) स्थितम्।

## उपयोक्ष्यमाणसंस्कारभेदाः।

उपयोक्ष्यमाणसंस्कारोऽप्यनेकविधः—साक्षाद्विनियुक्तसंस्कारः,

---

( १ ) होम इति यावत्।

( २ ) पुरोडाशावयवभूतं यद्द्व्यवदानं तत् कर्मकप्रक्षेपस्येत्यर्थः अत्रावदानपदमङ्गुष्ठपर्व—परिमितावदेयभागपरम्। तत्र कल्पसूत्रम् "आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वद्व्यमात्रमवदानम्, तिरश्चीनमवद्यति। तस्मादङ्गुष्ठपर्वद्व्यमात्रं खण्डयित्वा त्यक्तव्यमित्यर्थः।

साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः, विनियो(१)क्ष्यमाण-संस्कारश्चेति। तत्र आद्यो यथा—" "व्रीहीनवहन्ति" इत्यादिः "व्रीहिभिर्यजेत" इत्यादिवाक्यविनियुक्तव्रीहीणामवहन(२)न-संकारः। द्वितीयो यथा— "वत्समालभेत" इति। दोहाङ्गत्वेन साक्षाद् विनियुक्तस्य गोद्रव्यस्य उपकारको यो वत्सः तत्संस्कारक-मिदमालम्भनम्। तृतीयो यथा—"तप्ते पयसि दध्यानयति" इति। अत्र "सा वैश्वदेव्यामिक्षा" इति वाक्येन तच्छब्देन निर्दिश्य वैश्वदेवयागाङ्गत्वेन विनियोक्ष्यमाणसंस्कारकं दध्यानयनम्। पशुपुरोडाशयागस्तूपयुक्तोपयोक्ष्यमाणदेवतासंस्कारार्थः, त्यागांशे अदृष्टार्थश्च। अत्र तत्संस्कार्य्याग्नीषोमदेवताया वपायागे उपयुक्तार्थ-त्वात्, हृदयाद्यङ्गयागेषु उपयोक्ष्यमाणत्वाच्च। स्विष्टकृद्यागो द्रव्यांशे देवतांशे चोपयुक्तसंस्कारार्थः, त्यागांशे अदृष्टार्थश्च। सूक्त(३)वाक-साधनकं प्रहरणमपि तथैव(४)। उत्तमप्रयाजो(५) वक्ष्यमाणदेवतासं-

---

(१) यद्यपि उपयोक्ष्यमाण—संस्काराद्विनियोक्ष्यमाण—संस्कारोभिन्नो नाववुध्यते आपाततस्तथापि उपयोगः प्रधानयागक्रियासम्बन्धः विनियो-गस्तु यागाङ्गयत् किञ्चित् क्रियासम्बन्धः इत्यस्ति परस्परं भेदः।

(२) अवहननेन संस्कार इति तृतीयातत्पुरुषः।

(३) सूक्तवाक इष्टदेवताप्रकाशको मन्त्रः स एव साधनं यस्येति विग्रहः।

(४) तथैव सूक्तवाकमन्त्रकरणकं प्रहरणमपि द्रव्यांशे देवतांशे चोप-युक्तस्वसंस्कारकं त्यागांशे च अदृष्टार्थम्। इति।

तथा च श्रूयते 'सूक्तवाकेन प्रस्तरं प्रहरति' "इदं द्यावापृथिवी भद्रम-भूदि" त्यादिको मन्त्रः सूक्तवाकः, तत्र प्रस्तरो दर्भमुष्टिः, प्रहरणमग्नौ प्रक्षेपः।

(५) स्वाहाकारं यजतीति वाक्यविहितोऽन्तिम प्रयाज इत्यर्थः।

स्कारः, इतरां(१)शे अदृष्टार्थः । हृदयादिहविर्योगात्पूर्व्वं क्रियमाणो वसाहोमोऽपि वसांशे प्रतिपत्तिरितरांशे अदृष्टार्थ इत्याद्यूह्यम् ।

## मतान्तरेण प्रतिपत्तिलक्षणम् ।

केचित्तु—उपयोक्ष्यमाणसंस्कारभिन्नसंस्कारकर्म्मत्वं प्रतिपत्तिकर्मत्वम् । चतुरवत्तद्रव्यस्य होमेन भस्मीभूतस्य होमानन्तरमुपयोक्ष्यमाणत्वाभावात् तद्भिन्नत्वं होमेऽस्तीति लक्षणसङ्गतिरित्याहुः ।

## अर्थगुणकर्मणोः प्राधान्यविचारः ।

अत्रायं विशेषः—अर्थकर्म्मणि द्रव्यापेक्षया कर्म्मणः प्राधान्यम्, कर्म्मणि द्रव्यस्य गुणत्वम् । यथा अग्निहोत्रादौ दव्यादेर्गुणत्वम् । गुणकर्म्मणि द्रव्यस्य प्राधान्यं, द्रव्ये च कर्म्मणो गुणत्वम् । व्रीहीन् प्रोक्षति अवहन्तीत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यं प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति ।

## गुणकर्मणश्चातुर्विध्यम् ।

पुनरपि गुणकर्म्म चतुर्विधम्—उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्रोत्पत्तिसंस्कारो यथा—"अग्नीनादधीत" इति । मन्त्रविशेषैः सम्भारेषु निधापिता अप्याहवनीयादय उत्पद्यन्त इत्याहवनीयाद्युत्पत्तिहेतुभूतसंस्कारजनकत्वात् आधानस्य उत्पत्तिसंस्कारत्वम् । आप्तिसंस्कारो यथा—"स्वाध्यायोऽध्येतव्य" इति । अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम् । विकृतिर्यथा—"व्रीहीन् अवहन्ति" इति व्रीहिगतवैतुष्यरूपविकृतिजनकत्वादवहननं विकृति-

(१) यागांशे इत्यर्थः ।

संस्कारः । संस्कृतिर्यथा "व्रीहीन् प्रोक्षति" इति । अत्राधानमध्ययनञ्च स्वतन्त्रं गुणकर्म्म न तु क्रत्वङ्गम् । प्रोक्षणादिकं सर्व्वं क्रत्वङ्गं गुणकर्मेति ध्येयम् ॥

## अर्थकर्म्मणस्त्रैविध्यम् ।

अर्थकर्म्म त्रिविधम्—नित्यनैमित्तिककाम्यभेदात् । तत्र—"यावज्जीवमग्निहोत्रं जुहोति" "सायं जुहोति" "प्रातर्जुहोति" इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्त्तव्यतया अवगतमग्निहोत्रादिकं नित्यम् । "अग्नये पथिकृते(१) पुरोडाशमष्टाकपालं निर्व्वपेत्" इति दर्शपूर्णमासातिपत्तिनिमित्तकपथिकृदिष्ट्यादिकं नैमित्तिकम् ।

नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव, कृते फलं नास्तीति केचित् । अन्ये तु दुरितनिवृत्तिः फलमस्ति—

नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षयम् ।

इत्यादिवाक्यैः प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात् । नचैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम् । फलकामनापूर्व्वकानुष्ठानाभावात्, तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थं फलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः ।

## काम्यकर्मणस्त्रैविध्यम् ।

काम्यमपि कर्म्म त्रिविधम्—केवलम् ऐहिकफलकम्, आ(२)मु

---

(१) 'पथिकृद्' इति अग्नेः संज्ञाविशेषः ।

(२) अमुष्मिन् भवतीत्यामुष्मिकम् 'अदसोऽविप्रकृष्टार्थप्रतिपादकत्वात्परलोकार्थप्रतीतिः तथा च कारिका—

ष्मिकफलकम्, ऐहिकामुष्मिकफलकञ्चेति । तत्राद्यं यथा—कारीर्य्यादि । तत्तत्समयवर्त्तिशुष्यत्सस्यसञ्जीवनहेतुवृष्टिकामिना क्रियते, न कालान्तरभाविवृष्टिकामेन, जन्मान्तरीयवृष्टिकामेन वा ।

केवलामुष्मिकफलकं यथा—स्वर्गाद्यर्थदर्शपूर्णवासादिकम् । स्वर्गस्य इहलोकभोग्यत्वाभावात् ।

ऐहिकामुष्मिकसाधारणफलकं यथा–"वायव्यं श्वेतमालभेत भूतिकामः" इति भूत्यादिफलकमित्यन्यत्र विस्तरः ।

## वेदस्यालौकिकार्थबोधकत्वम् ।

ननु दर्शपूर्णमासादिकर्म्मणां व्रीह्यादिद्रव्याणाञ्च प्रत्यक्षत्वेन लौकिकत्वात् कथं वेदस्यालौकिकार्थबोधकत्वमिति चेन्न । कर्म्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादिफलसाधनत्वमप्रत्यक्षमिति 'तत्फलसाधनतया तत् कर्म कर्तव्यम्' इत्येवं फलसाधनतया कर्म्मकर्त्तव्यताबोधकस्य वेदस्यालौकिकार्थबोधकत्वात् । एवं व्रीह्यादीनां यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः ।

## वेदप्रामाण्यविचारविधि विचारः ।

इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते—

तत्र "स्वर्गकामो यजेत" इत्यत्र यजिधातोरुपरितने 'त' प्रत्यये धर्म्मद्वयमस्ति—आख्यातत्वं लिङ्त्वं चेति । तत्र आख्यातत्वं सर्व्वलकारसाधारणं तदवच्छेदेन लिङ्प्रत्ययः पुरुषप्रवृत्तिरूपाम् आर्थभावनां प्रतिपादयति ।

---

'इदमः समक्षरूपं समीपतरवर्तिचैतदोरूपम् ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति ॥

## तत्रार्थी भावना।

सा चार्थभावना किं, केन, कथमिति अंशत्रयविशिष्टा। तथाहि-यजेत इत्यत्र प्रथमं प्रत्ययेन 'भावयेद्' इति प्रतीयते। सुबन्ताभिहितानां सर्व्वेषां कारकाणां तिङन्तार्थक्रियान्वयनियमे सति तिङन्तार्थस्य प्राधान्यात् प्रथमं प्रत्ययार्थभावनाया उपस्थितिर्युक्ता। ततः करोति-समानार्थकभावयतेः सकर्म्मकत्वात् 'किम्भावयेत्' इति कर्म्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो भाव्यत्वेनान्वेति। भाव्यत्वेन कर्मत्वेनेत्यर्थः। साध्यत्वेनेति यावत्। न तु समानपदोपात्तोऽपि धात्वर्थो भाव्यत्वेनान्वेति। दुःखात्मकस्य यागस्य ईप्सिततमत्वरूपकर्मत्वायोग्यत्वात्। स्वर्गस्य त्वानन्दात्मकत्वेन ईप्सिततमतया कर्म्मत्वेनान्वययोग्यत्वात्। ततश्च 'स्वर्गं भावयेद्'इति बोधो भवति। ततः 'केन' इति करणाकाङ्क्षायां समानपदोपात्तो यागः करणत्वेनान्वेति-'यागेन स्वर्गं कुर्याद्' इति। ततः 'कथं यागेन स्वर्गं कुर्य्याद्' इति कथम्भावाकाङ्क्षायाम्—अग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजनितादृष्टोपकारेण च सहितेन यागेन स्वर्गं कुर्य्यादिति अग्न्यन्वाधानप्रयाजादिकमङ्गजातम् इतिकर्त्तव्यतात्वेनाऽन्वेति। कथम्भावाकाङ्क्षापूरकत्वमितिकर्त्तव्यतात्वम्। यथा-'ओदनकामः पचेत्' इत्यत्र लिङा भावना प्रतीयते, किं भावयेदित्याकाङ्क्षायाम् ओदनो भाव्यत्वेनान्वेति, केनेत्याकाङ्क्षायां पाकेनेति लभ्यते, कथमित्याकाङ्क्षायां तृणफूत्कारसहितेनेति। ततश्च तृणफूत्काराद्युपकृतेन पाकेन (तेजःसंयोगेन) ओदनम्भावयेदिति वाक्यार्थः सम्पद्यते तद्वद्वेदेऽपि बोध्यम्।

## शाब्दी भावना।

स एव लिङ्प्रत्ययो लिङ्त्वावच्छेदेन शब्दभावनां प्रेरणाख्या-

-मभिधत्ते। लोकेऽपि "गामानय" इत्याचार्य्य-वाक्यश्रवणानन्तरम् 'अयमाचार्यो माङ्गवानयने प्रेरयति' इति प्रेरणाख्यव्यापारं ज्ञात्वैव शिष्यो गवानयने प्रवर्त्तत इत्यन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानं प्रवृत्ति-कारणम्। प्रेरणाज्ञानस्य चान्वयव्यतिरेकाभ्यां लिङादिश्रवणज-न्यत्वावधारणात् लिङ्गादेः प्रेरणायां शक्तिर्लोके गृह्यते इति वेदेऽपि तत्रैव शक्तिकल्पनौचित्यात्। इयांस्तु विशेषः—लोके गवानयनादि-प्रवृत्त्यनुकूलः प्रेरणाख्यो व्यापारः प्रयोक्तृपुरुषगताभिप्रायविशेषः, वेदे तु प्रयोक्तृ(१)पुरुषाभावात् लिङादिशब्दनिष्ठ एव स इत्यङ्गी-क्रियते। अत एव शब्दनिष्ठव्यापारत्वाच्छाब्दी भावनेत्युच्यते, यागहोमादिविषयकप्रवृत्तिहेतुत्वात् प्रवर्त्तना प्रेरणेति चोच्यते।

सैषा शाब्दभावनाऽपि अंशत्रयविशिष्टा। तत्र पुरुषप्रवृत्तिरूपा-ऽऽर्थभावना भाव्यत्वेनान्वेति। अध्ययनावगतलिङादिकं(२) करणत्वे-नान्वेति। तत्र "साङ्गवेदाध्येतारोऽधीतव्याकरणनिगमनिरु-

---

(१) मीमांसकानां नये वेदस्य नित्यत्वेन तस्य कर्तुरभावात् तथा च प्रमाणम्—स्वयम्भूरेव भगवान् वेदोगीतस्त्वया पुरा।

शिवाद्या ऋषिपर्य्यन्ताः स्मर्तारो नास्य कारकाः।

न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता पितामहः।

तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे॥ इति।

(२) करणत्वेनान्वेतीति—तेषां च लिङ्गादीनां करणत्वं न भावनोत्पादकत्वेन तत्पूर्वमपि तस्याः शब्दे सत्त्वात्। किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिवर्त्तकत्वेन वेति अर्थ संग्रहकृत्। एवमर्थभावनायां यागादेः करणत्वमपि न भावनोत्पादकत्वेन प्रवृत्तिरूपायास्तस्या यागादि भाव्यत्वाभावात्। किन्त्वर्थभावनाभाव्यस्वर्गादिजनकत्वेनैवेति ध्येयम्।

क्तादिवशाद् व्युत्पत्तिमन्तः पुरुषा अध्ययनगृहीतस्वाध्याय-गतलिङादिभिः प्राशस्त्यज्ञानसचिवैर्यागाद्यर्थं स्वकर्त्तव्यत्वेन बुद्ध्वा यागादीननुतिष्ठेयुः" इति शाब्दभावनाबोधः। अनुतिष्ठेयुः, अनुष्ठानं कुर्युरित्यर्थः। अनुष्ठानं प्रवृत्तिः। तेन पुरुष(१) प्रवृत्तेः शाब्दभावनाभाव्यत्वमक्षतम्।

इत्थञ्च शाब्दभावना ज्योतिष्टोमादिप्रातिस्विकवाक्येषु स्वरूपेण प्रतीयमानाऽपि कर्त्तव्यत्वेन न प्रतीयते आर्थभावनाया एव तेषु(२)कर्तव्यत्वावगमात्, किन्तु "स्वाध्यायोऽध्येतव्य" इति वाक्ये एव कर्तव्यत्वेन प्रतीयते। न चात्रार्थभावनाया एव विधेयत्वमिति वाच्यम्। "स्वाध्यायोऽध्येतव्यः" इतिवाक्यस्थार्थभावनाया एव (३)सकलविधिवाक्यस्थशाब्दभावनारूपत्वात्।

---

(१) पुरुषप्रवृत्तिरूपाया आर्थभावनाया इत्यर्थः।

(२) कर्तव्यत्वावगमाद् विधेयत्वावगमादित्यर्थः अत्रायमाशयः—इह शास्त्रे भावनाया एव विधेयत्वं स्वीक्रियते न तु यागादिकर्मणां तेषां करणत्वेनाप्राधान्यात्।

तथा चैकादशीतत्त्वे भाव्याधिकारणे स्मार्त्तेनाप्यभिहितं तत्तद्विधिवाक्येषु भावनाया एव विधेयत्वादिति। एवंस्थिते, विचारः क्रियते किं अर्थभावनाया विधेयत्वम् उत शब्दभाशनायाः? तत्र शब्दभावनाया शब्दवृत्तिव्यापाररूपत्वेन नित्यत्त्वेन चानुष्ठानायोग्यत्वात् अर्थभावनाया एवपुरुषवृत्तिव्यापार रूपत्वेन साक्षात् फलजनकत्वेन न च विधेयत्व-मित्येवं रूपेण कर्त्तव्यावगमादित्यर्थः।

(३) सकलविधिवाक्यस्थ-शब्द-भावना-रूपत्त्वादिति। स्वाध्यायोऽध्येतव्य इति विधिवाक्यस्थ विध्यर्थकतव्यप्रत्ययवाच्या या शब्द भावना तस्यां स्वाध्याय-पद-वाच्य-सकल-विधिवाक्यस्थ-लिङ्गादि

तथाहि—अधिपूर्व्वकाद् "इङ् अध्ययने" इति धातोः कर्म्मणि तव्यप्रत्ययो विहितः। कर्म्म च स्वाध्यायः प्रधानम्, तत् संस्कारकमध्ययनं गुणकर्म्म। व्रीहिसंस्कारकप्रोक्षणादिवत्।(१)अध्ययनजनितग्रहणसंस्कारविशिष्टस्वाध्यायस्य प्रयोजनाकाङ्क्षायां स्वाध्यायगततत्तल्लिङादिविशिष्टवाक्यसामर्थ्यलभ्यं यद् अनुष्ठानौपयिकयागादिरूपार्थज्ञानं तदेव—दृष्टत्वात्, तत्तत्कर्म्मानुष्ठानद्वारा स्वर्गादिरूपालौकिकश्रेयः साधनत्वाच्च प्रयोजनम्। कर्मावबोधं विना कर्म्मानुष्ठानायोगात्। न त्वदृष्टं प्रयोजनम्। दृष्टफले सम्भवत्यदृष्टफलकल्पनाऽयोगात्। तथाच स्वाध्यायविधिनैव स्वाध्यायगतविधिवाक्यगतलिङादिप्रतिपादिताः सर्व्वाः शाब्दभावनाः अंशत्रयविशिष्टाः कर्त्तव्यत्वेन विधीयन्ते। साङ्गवेदाध्ययनेन व्युत्पन्नाः पुरुषाः अध्ययनगृहीतस्वाध्यायगतलिङादिभिरर्थवादावगतप्राशस्त्यरूपाङ्गसचिवैः फलवद्यागादिकर्तव्यतां बुद्ध्वा यागादीननुतिष्ठेयुरिति। अनुतिष्ठेयुः कुर्युरित्यर्थः। (२)तत्र पुरुषप्रवृत्तेर्भाव्यत्वेनान्वयात्, अध्ययनावगतलिङादेः करणत्वेनान्वयात् प्राशस्त्यज्ञानस्येतिकर्त्तव्यतात्वेनान्वयात् शाब्दभावनाया अपि अंशत्रयवैशिष्ट्यम् अर्थभावनाया इवेष्टम्।

---

वाच्यशब्द-भावना साध्यत्वेनान्वयात्। शब्दभावनायां साध्यत्वेनार्थभावनाया एव अन्यत्रान्वय-दर्शनात्तासां शब्दभावनानामेतद्विधेरर्थभावनात्वमिति भावः। न च तासां नित्यत्वात् साध्यत्वेनान्वयायोग्यत्वमिति वाच्यम् स्वाध्यायोऽध्येतव्य इति विधेरर्थज्ञान- रूपदृष्टार्थत्वेन व्यवस्थापनात् तत्तत् शब्द-भावना-विषयकज्ञानस्यैव साध्यत्वाङ्गीकारात्।

(१) अध्ययनजनितं यत् ग्रहणं ज्ञानं तज्जन्यसंस्कारविशिष्टस्य स्वाध्यायस्येत्यर्थः।

(२) तत्र शब्दभावनायां पुरुषप्रवृत्तेरर्थभावनाया इत्यर्थः।

तत्र समीहितस्वर्गादिभाव्यकत्वभानमपि विधिवशादेव। प्रवर्त्तनापरो विधिः यागादेः पुरुषार्थाऽसाधनत्वे तत्र पुरुषं प्रवर्तयितुं न शक्नोतीति (१)स्वभाव्यपुरुषप्रवृत्तिविषयस्य यागादेः पुरुषाभिलषितस्वर्गादिसाधनत्वमापादयति। अन्यथा स्वस्य प्रवर्तनात्वमेव न स्यात्। प्रवृत्तिहेतुव्यापारस्यैव प्रवर्तनात्वात्। लडादिस्थले तु प्रवर्त्तनात्मकविधेरभावादार्थभावनायाः पुरुषार्थभाव्यत्वनियमो नास्ति।

## भावना लक्षणम्।

भावनात्वं नाम भवितुः प्रयोजकव्यापारत्वम्। तत्रार्थभावनायां भवितुर्जायमानस्य स्वर्गादेः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः। शाब्दभावनायामपि पुरुषप्रवृत्तिरूपस्य भवितुः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः।

## ज्योतिष्टोमादीनां नामत्वप्रतिपादनम्।

ननु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यत्र यागेन स्वर्गं भावयेदित्यर्थवर्णने ज्योतिष्टोमपदस्य कथमन्वयः ?—इति चेन्न। भावनाकरणत्वेनाभिमतयागनामत्वेनान्वयात्—'ज्योतिष्टोमनामकेन यागेन' इति।

कथं तन्नामत्वमिति चेन्न। ज्योतिराख्यास्त्रिवृदादिस्तोमा अस्मिन् सन्तीति व्युत्पत्त्या यागनामत्वात्। यागस्य त्रिवृतादिस्तोमसम्बन्धः केनावगम्यते इति चेन्न। "त्रिवृत्, पञ्चदशः, सप्तदशः स्तो-(२)मा" इति वाक्यान्तरेण एतच्छब्दार्थस्य तत्सम्बन्धावगमात्। एवं शास्त्रोक्तैस्तत्प्रख्यादिभिर्हेतुभिस्तत्र तत्र नामत्वं बोध्यम्।

(१) स्वपदेनात्र प्रवर्तनोच्यते। प्रवर्तनायाः प्रवृत्त्यनुकूलव्यापाररूपत्वात् स्वभाव्यायाः पुरुषप्रवृत्तेर्विषयस्येति समासः।

(२) 'स्तोम' इति वेदोक्तसंज्ञाविशेषः।

## तत्प्रख्यादिहेतुविचारः ।

शास्त्रे हि—तत्प्रख्य–तद्व्यपदेश–यौगिक–वाक्यभेदैश्चतुर्भिर्नामत्वं प्रतिपादितम् । तथाहि "अग्निहोत्रं जुहोति" इत्यत्र अग्निहोत्रशब्देन अग्निदेवतारूपो गुणो न विधीयते, "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" इतिवाक्यविहितेन मन्त्रेण देवतायाः प्राप्तत्वात् । किन्तु अग्निप्रख्यापकम् (अग्निप्रापकं) यच्छास्त्रान्तरम्– "अग्निर्ज्योतिर्ज्योतिरग्निः" इत्यादिकम्, तेन प्राप्तमग्निसम्बन्धं निमित्तीकृत्य अग्नये होत्रं होमोऽस्मिन्निति बहुव्रीहिणा अग्निहोत्रपदस्य होमनामधेयत्वम् । न च होमस्य प्रत्ययवाच्यार्थभावनायां करणत्वात् तन्नामत्वे "अग्निहोत्रेण" इति तृतीया स्यात् "ज्योतिष्टोमेन" इतिवदिति वाच्यम् । द्वितीयाया एव लक्षणया करणार्थकत्वात् । 'नासाधितं करणम्' इति न्यायेन असाधितस्य करणत्वायोगात् अर्थात् प्राप्तहोमगतसाध्यत्वानुवादकत्वेन वा द्वितीयोपपत्तेः—इति तत्प्र(१)ख्यन्यायादत्र नामधेयत्वम् ।

तथा—"श्येनेनाभिचरन् यजेत" इत्यत्र श्येनपदं यागनामधेयम्, न तु यागाङ्गत्वेन श्येनपक्षिरूपगुणविधिः । "यथा ह वै श्येनो निपत्यादत्ते एवमेवायं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन" इत्युपमानोपमेयव्यपदेशानुपपत्तिप्रस-

---

(१) 'तत्प्रख्यञ्चान्यशास्त्रम्' इति सिद्धान्तसूत्रं, यतः तत्प्रख्यं तस्य देवतारूपगुणस्य प्रख्यं प्रकाशकं शास्त्रान्तरमस्ति, अतस्तत्र तस्य पुनर्विधाने अनुवादत्वापत्तेरग्निहोत्रपदं नामधेयमित्यर्थः । तथा च कारिका—

विधित्सितगुणप्राप्तिं शास्त्रमन्यत् यतस्त्विह ।
तस्मात् तत्प्रापणं व्यर्थमिति नामत्वमिष्यते । इति ।

ज्ञात्। 'श्येनपक्षी यथा पक्ष्यन्तरं निपत्यादत्ते' एवमयमपि श्येनना-मकः कर्म्मविशेषो भ्रातृव्यं शत्रुं निपत्यादत्ते' इति व्यपदेशः कर्म्म-नामत्वपक्षे एव युज्यते। यागाङ्गतया श्येनपक्षिविधौ तु स्वस्य स्वेनै-वोपमानोपमेयभावः स्यात्। स चायुक्तः। तस्माच्छ्येनतुल्यताव्य-पदेशाच्छ्येनपदं कर्मनामधेयम्। ततश्च '**अभिचरन् शत्रुवधकामः श्येननामकेन यागेन अभिचारं भावयेद्**, इति वाक्यार्थः।

नन्वेवमप्यभिचारस्यापि वेदोक्तत्वात् आभिचारिके कर्म्मण्या-स्तिकानामपि प्रवृत्तिः स्यादिति चेन्न। वेदोक्तोऽप्यभिचारो वेदवि-हितो न भवति फलत्वात्। '**फलं न विधेयं किन्तु फलमुद्दिश्य तत्साधनत्वेन कर्मैव विधेयम्**' इति सिद्धान्तात्। अतोऽभिचार-स्याविहितत्वेन प्रत्यवायजनकत्वम्।

एवम् "**उद्भिदा यजेत पशुकामः**" इत्यत्र पशुरूपफलाय विधित्सितस्य यागस्य उद्भित्पदन्नामधेयम्, न तु यथाकथञ्चित् प्राप्तयागमुद्दिश्य तदङ्गतयोद्भिद्रूपगुणविधिः। दध्यादिवदुद्भिन्ना-मकस्य गुणस्याप्रसिद्धत्वात्। यागे तु '**उद्भिद्यते फलमनेन**' इति योगसम्भवाद् यागनामत्वम्।

ननु '**उद्भिद्यतेभूमिरनेन**' इतियोगवशेन खनित्रादावप्युद्भिदः प्रयोगसम्भवात् खनित्रादिगुणविधिः किन्न स्यादिति चेन्न एतादृश-स्थले गुणविधिः क्वापि वक्तुं न शक्यते। विरुद्धत्रिकद्वयसमावे-शाख्यदोषप्रसङ्गात्।

## विरुद्धत्रिकविचारः।

तथाहि—"**उद्भिदा यजेत पशुकाम**" इत्यत्र मानान्तरेणा-प्राप्तस्य यागस्यानुवादासम्भवात् पशुकर्म्मकभावनायां करणत्वेन यागो विधेयः-'**यागेन पशून् भावयेद्**' इति। ततश्च यागस्य

विधेयत्वम्, फलं प्रति शेषतया प्रतीयमानत्वात् गुणत्वम्, 'शेषतया, अङ्गतयेत्यर्थः' फलसिद्ध्यर्थं पुंसाऽनुष्ठीयमानत्वात् उपादेयत्वमिति विधेयत्वगुणत्वोपादेयत्वात्मकमेकं त्रिकं यागे अस्ति । तथा यागोद्देशेनोद्भिद्गुणविधौ विधित्सितगुणापेक्षया प्राधान्यम्, उद्देश्यत्वम्, अनुवाद्यत्वञ्चेति द्वितीयं त्रिकम्। तदेतत् त्रिकद्वयं परस्परविरुद्धम् एकस्मिन् यागे प्रसज्येत, अतो न गुणविधिः ।

न च "सोमेन यजेत" इत्यत्र विरुद्धत्रिकं विनैव सोमशब्दस्य सोमवति यागे लक्षणामङ्गीकृत्य, 'सोमवता यागेनेष्टं भावयेद्' इति सोमविशिष्टयागविधानाद् यथा सोमरूपगुणविधिः, तद्वद् उद्भित्पदस्यापि मत्वर्थलक्षणया उद्भिद्विशिष्टयागविधानाद् अत्रोद्भिद्गुणविधिः स्यादिति वाच्यम् । सोमादौ गत्यन्तराभावान्मत्वर्थलक्षणया विशिष्टविध्यङ्गीकाराद्(१)उद्भिदादौ नामत्वेन गतिसम्भवाद्विशिष्टविध्यङ्गीकारायोगात् । तस्माद्योगवशादुद्भिदादीनां नामत्वम्।

तथा—"चित्रया यजेत पशुकामः" इत्यत्र चित्रापदं प्राजापत्यनामधेयम् । "दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति सामानाधिकरण्याद् यो दध्यादिद्रव्यषट्कस्य प्रजापतिदेवतासम्बन्धः श्रुतः तेनानुमितो यागो विधीयते । विहि-

(१) सोमेन यजेतेत्यत्रापि नामत्वेन गतिसम्भवात् मत्वर्थलक्षणाकरणमनुचितमिति न वाच्यम्, यौगिकार्थाभावेन यौगिकरूपनामधेयनिमित्तविरहान्न नामत्वम् । अतोऽगत्या मत्वर्थलक्षणया गुणविशिष्टविधिः । 'उद्भिदा यजेत' इत्यत्र तु लक्षणाश्रयणमन्तरेणापि नामत्वेन गतिसम्भवे न लक्षणाश्रयणमिति भावः । उक्तञ्च मिश्रैः—

विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा ।
सोमादौ गत्यभावात् सा नत्वत्र गतिसम्भवात् ॥ इति ।

तस्य यागस्य फलाकाङ्क्षायां "चित्रया यजेत" इति वाक्यं फल-सम्बन्धविधायकम्। तत्र फलार्थत्वेन पुनर्विधिरिति तस्य प्राजापत्ययागस्य दध्यादिविचित्रद्रव्यकत्वात् चित्रापदं कर्मनामधेयम्, न तु "अग्नीषोमीयं पशुमालभते" इतिवाक्यप्राप्तपशुयागं 'यजेत' इत्यनूद्य चित्रत्वरूपगुणद्वयविधानम्। मानान्तरप्राप्तं कर्मोद्दिश्य तत्रानेकगुणविधाने वाक्यभेदात्। तदुक्तम्

'प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः'। इति।

मानान्तराप्राप्ते कर्म्मणि त्वनेकदेवताऽष्टाकपालपुरोडाशामावास्यापौर्णमास्याद्यनेकगुणविशिष्टो द्रव्यदेवतासम्बन्धेनानुमितो यागो विधीयते इति सिद्धान्तः। तदुक्तम्—

'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः'। इति।

अथ—यथा "पशुना यजेत" इत्यत्र मानान्तरप्राप्तयागमुद्दिश्य तदङ्गतया 'पशुना' इत्येकपदोपात्तानां पशुद्रव्यतद्गतलिङ्गसङ्ख्यानां त्रयाणां वाक्यभेदं विनैव विधिरङ्गीकृतः, तद्वदत्राप्येकपदोपात्तचित्रत्वस्त्रीत्वविशेषितपशुद्रव्यकारकस्य विधानान्न वाक्यभेदः। अत एव तत्र विधेयस्य पशोरुपादेयत्वात् तद्गतमेकत्वं यज्ञाङ्गतया विवक्षितमित्येकेनैव पशुना यष्टव्यम्, "ग्रहं सम्मार्ष्टि" इत्यत्र उद्देश्यगतत्वादेकत्वमविवक्षितमिति सिद्धान्तप्रवादः कथम्?। "ग्रहं संमार्ष्टि" इत्यत्र 'ग्रहम्' इति द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात् प्रयोजनवत्त्वाच्च प्राधान्यं गम्यते, संमार्गस्तु ग्रहं प्रति गुणभूतः। 'प्रतिप्रधानं गुण आवर्त्तनीयः' इति न्यायाद् 'यावन्तो ग्रहास्तेषां सर्वेषां संमार्गः' इति निश्चये सति, 'कति ग्रहाः सम्मार्जनीयाः' इति बुभुत्सायां

अभावादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम् । यद्युच्येत— 'नेदमुद्देश्यगतं किन्तु स्वयं विधेयम्' 'ग्रहं संमृज्याद्' 'यं संमृज्यात्तञ्चैकम्' इति । तथा सति विधेयभेदाद्वाक्यभेदः स्यात् । तथाबुभुत्साया अभावात् विधानाऽयोगाच्चोद्देश्यगता सङ्ख्या न विवक्षिता ( पू० मी० अ० ३ पा, १ अधि० ७ ) । उद्देश्यगतमपि विशेषणं किञ्चिद्विवक्षितं यस्य विशेषणस्य विवक्षां विना उद्देश्यप्रतीतिर्न पर्यवस्यति । यथा—तत्रैव ग्रहत्वं विवक्षितम् । तद्विवक्षां विना उद्देश्यस्वरूपस्य ज्ञातुमशक्यत्वात् तेन ग्रहजातीयसाधनकसोमयागापूर्वार्थत्वाच्चमसेषु न संमार्ग इति स्थितम् । ( पू० मी० अ० ३ पा० १ अधि० ८ ) ।

"पशुना यजेत" इत्यत्र तु यागं प्रति पशुर्विधेयत्वाद् गुणभूतः, प्रतिगुणं प्रधानावृत्तिर्नास्तीति कियद्भिः पशुभिः यागः कर्त्तव्य इत्याकाङ्क्षायाम् एकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितम् । बुभुत्सितत्वात् ( पू० मी० अ०४पा० १ अधि० ५ )

किञ्च लिङ्गसङ्ख्याविशेषितस्य पशुद्रव्यरूपकारकस्य एकपदोपात्तस्य विधेयत्वाद्विधेयपशुद्वारा तद्गतलिङ्गसङ्ख्यादेरपि क्रियाङ्गत्वादेकत्वं विवक्षितम् । अथवा तृतीयया विभक्त्याऽभिहितयोर्लिङ्गसङ्ख्ययोर्विभक्त्यभिहितया करणकारकशक्त्याऽऽत्मसात्कृतयोः प्रातिपदिकार्थपशुद्रव्येण सम्बन्धमनादृत्य तद्वदेव साक्षात् क्रियाङ्गत्वेन विधाने सति पश्चादरुणैकहायनीन्यायेन परस्परमन्वयः—यागाङ्गत्वेन विहितो यः पशुः स एकः पुमांश्चेति ।

यथा—"अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति" इत्यत्र कारकाणां क्रियान्वयनियमात् करणविभक्तिभिरारुण्यपिङ्गाक्षीत्वादीनां चतुर्णां परस्परमनन्वितानामेव सोमक्रयणाङ्गत्वेन अन्वये सति आरुण्यादेर्गुणस्यामूर्त्तस्य स्वतः क्रियासा-

धनत्वायोगात् क्रियासाधनैकहायनीगोपरिच्छेदकत्वेन पश्चात् परस्परं पार्ष्णिकान्वयः—या एकहायनी गौः सा पिङ्गाक्षी अरुणेति, तद्वत्। (पू० मी० अ० ३ पा० १ अधि० ६)।

तदेवमुद्देश्यगतविशेषणमविवक्षितम्, उपादेयगतं विवक्षितमिति स्थितम्।

एवञ्च चित्रापदेन चित्रत्वस्त्रीत्वोभयविशेषितपशुकारकस्य यजेतेतिपदानूदितेऽग्नीषोमीयपशुयागे विधातुं शक्यत्वात् कथं नामत्वमिति चेन्न।

तथा सति प्रकृतस्य प्राजापत्ययागस्य फलसम्बन्धाकाङ्क्षस्य हानम्, अप्रकृतस्य अग्नीषोमीययागस्य कल्पना च स्यात्। तद्द्वयम-युक्तम्। तस्माच्चित्रापदं कर्म्मनामधेयम्। एवं तत्प्रख्यादिभिरन्यतमेन सर्वत्र कर्म्मनामत्वमूह्यम्॥

## अथार्थवादो विचार्यते।

अर्थवादानान्तु स्वार्थपरत्वे प्रयोजनाभावादध्ययनविधिवशेन फलवदर्थज्ञानार्थत्वस्यावश्यकत्वाद्विधेयगतप्राशस्त्यप्रतिपादनद्वारा वि-ध्येकवाक्यतया प्रामाण्यम्।

स चतुर्विधः—निन्दा—प्रशंसा—परकृति—पुराकल्पभेदात्।

तत्र निन्दाऽर्थवादो यथा—"(१) असत्त्रं वा एतद् यदच्छन्दो-मम्", "अश्रुजं हि रजतं, यो वर्हिषि ददाति पुराऽस्य संवत्सराद् गृहे रुदन्ति" इत्या।

प्रशंसा यथा—"शोभतेऽस्य मुखं य एवं वेद", "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्येवमादिः।

---

(१) अत्र नञोऽप्राशस्त्यमर्थः। छन्दोमशब्देन स्तोम उच्यते। गेय-मन्त्रविशेषः स्तोमः यत् सत्रं स्तोमरहितं तद् अप्रशस्तमित्यर्थः।

परेण महता पुरुषेणेदं कर्म्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिः, यथा—अग्निर्वा अकामयत" इत्यादिः ।

परप्रवक्तृकार्थादिप्रतिपादकः पुराकल्पः, यथा—"तमशपद् धिया धिया त्वा वध्यासुः" इत्यादिः ।

तत्र निन्दाऽर्थवादस्य विधेयान्यनिन्दाद्वारा विधेयप्राशस्त्यपरत्वम् । "अश्रुजम्" इत्यादिरजतनिन्दाद्वारा विधेयभूतरजतदाननिषेधप्राशस्त्यपरत्वे विरोधाभावात् । इतरेषां त्रयाणां साक्षात् प्राशस्त्यपरत्वमेव । "वायुर्वै" इत्यर्थवादस्य वायुः क्षिप्रगामित्वादतीव प्रशस्ता देवता, अतस्तद्दैवत्यं कर्म्म प्रशस्तमिति विधेयदेवतागतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम् ।

"अग्निर्वा अकामयत" इत्यस्य अग्निदैवत्यो यागः पूर्वकाले अग्निना कृतत्वात् प्रशस्तः, आधिक्यादिदानीमप्यन्यैर्यजमानैरवश्यं कर्त्तव्य इति विधेयकर्म्मगतप्राशस्त्यद्वारा विध्येकवाक्यम् । एवमन्यत्राप्यूह्यम् ।

क्वचित् कार्य्यान्तरमप्यस्ति, यथा"अक्ताः शर्करा उपदधाति" इतिविधौ "अक्ता" इतिपदेन द्रवद्रव्यसामान्यं प्रतीयते । तच्च द्रव्यं किमिति सन्देहे "तेजो वै घृतम्"इत्यर्थवादाद् घृतमिति निश्चीयत इति "तेजो वै घृतम्"इत्यर्थवादस्य सन्दिग्धार्थनिर्णायकत्वेन प्रामाण्यम्।

## अथ मन्त्रविचारः ।

(१)मन्त्राणामपि अध्ययनविधिना कृत्स्नस्वाध्यायस्य फलवदर्थ-

---

(१) यत्राभियुक्तानां मन्त्रोऽयमिति समाख्यानं स मन्त्रः। उक्तञ्च मिश्रैः ।

अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्प्यते ।
स्वाध्यायकाले तेषाञ्च समाम्नातेषु मन्त्रधीः ॥

ज्ञानार्थत्वमेव, न त्वदृष्टार्थत्वम् । दृष्टे (१) सम्भवत्यदृष्टकल्पनाऽयोगात् । प्रयोगकाले कर्म्मज्ञानं विना कर्म्मानुष्ठानायोगात् कर्मौपयिकमर्थज्ञानं मन्त्रैः क्रियते ।

न चोपदेष्टृवचनादिनाऽप्यर्थस्मरणसम्भवादनुष्ठानोपपत्तिरिति वाच्यम् । मन्त्रैरेवार्थं स्मृत्वाऽनुष्ठाने सति फलं भवति नान्यथेति नियमाङ्गीकारात् । नियमेनादृष्टस्याङ्गीकारात् । तदभावे तज्जन्यादृष्टलोपे तन्मूलं फलं न सिध्यतीति कल्पनात् ।

नन्वेवं मन्त्राणां स्वप्रकाश्येऽर्थे विनियोग इति फलितम् । विनियोगो नाम शेषत्वेनान्वयः । शेषत्वं नाम अङ्गत्वम् । ततश्च "इमामगृभ्णन् रशनाम्" इतिमन्त्रस्य रशनाग्रहणसामर्थ्यमस्तीति रशनाग्रहणप्रकाशनसामर्थ्यरूपात् लिङ्गादेव रशनाग्रहणाङ्गत्वोपपत्तेः "इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते"
"इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते" इति वचनं किमर्थमिति चेत्-न । परिसङ्ख्याऽर्थत्वात् । चयनप्रकरणेऽश्वरशनाग्रहणम्, गर्दभरशनाग्रहणञ्चेति द्वयमस्ति । तत्र लिङ्गादश्वरशनायां मन्त्रप्राप्तावुच्यमानायां लिङ्गाविशेषाद्गर्दभरशनायामपि मन्त्रः प्राप्तः, अतोऽश्वरशनायामेव मन्त्रः कार्य्यो न गर्दभरशनायामिति मन्त्रनिवृत्तिरूपपरिसङ्ख्याऽर्थोऽयं विधिः ।

---

मन्त्रानध्यापयामोऽद्य तथा मन्त्रानधीमहे ।
मन्त्राम्नानबहिर्भूत ऊहादौ नास्ति मन्त्रधीः ॥

(१) सम्भवतीत्युक्तेः 'हुं फट्' प्रभृति मन्त्राणां प्रयोगार्थस्मारकत्वाभावात् अदृष्टे फलकल्पनमपि युक्तमेव ।

"यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पनम्" । इत्युक्तत्वात् ।

## परिसंख्याया दोषत्रयम् ।

सा च परिसङ्ख्या (१) त्रिदोषा—स्वार्थत्यागः, परार्थस्वीकारः, प्राप्तबाधश्चेति । तत्र "अश्वाभिधानीमादत्ते" इति वाक्यस्य अनेन मंत्रेणाश्वरशनाऽऽदानं कुर्यादिति स्वार्थः, स च त्यक्तः । गर्दभरशनातो मन्त्रनिवृत्तिः परार्थः, स च स्वीकृतः । गर्दभरशनायामपि लिङ्गात् प्राप्तस्य मन्त्रस्यानेन बाधश्च—इति त्रिदोषा परिसङ्ख्या गत्यभावादङ्गीकृता । गत्यन्तरे सति सा न युक्ता ।

एवमष्टदोषदुष्टविकल्पोऽप्यगतिकोऽङ्गीकृतः । यथा यदाग्नेयोऽष्टाकपालः संस्कृतः पुरोडाशो यागाङ्गत्वेनावगतः । तत्र अपूपविशेषस्य पुरोडाशस्य प्रकृतिद्रव्याकाङ्क्षायाम् अनियमेन यस्य कस्यचिद् द्रव्यस्य प्राप्तौ "व्रीहिभिर्यजेत्" इतिवाक्यात् व्रीहयो नियम्यन्ते, एवं "यवैर्यजेत" इतिवाक्याद्यवा अपि नियम्यन्ते, तयोरेकार्थत्वाद्विकल्पः ।

एवम् "अतिरात्रे षोडशिनं गृह्णाति" इति षोडशिग्रहो विहितः । तथा "नातिरात्रे षोडशिनं गृह्णाति" इति प्रतिषेधात् ग्रहणाभावो विहितः, तयोर्ग्रहणाग्रहणयोः परस्परविरुद्धयोरेकस्मिन् प्रयोगेऽनुष्ठातुमशक्यत्वात् कचित् प्रयोगे ग्रहणानुष्ठानम्, प्रयोगान्तरे तदभावानुष्ठानमिति तत्रापि विकल्पः ।

## विकल्पे दोषाष्टकम् ।

स चाष्टदोषदुष्टः । तथाहि—पूर्वं व्रीहिप्रयोगे यवशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यपरित्यागः, अनुष्ठापकत्वलक्षणाप्रामाण्यस्वीकारः ततो द्वितीयप्रयोगे यवानुष्ठाने पूर्वं त्यक्तं यत् प्रामाण्यं

(१) श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा ॥ इति ।

तत्स्वीकारः, स्वीकृतं यदप्रामाण्यं तत्परित्यागश्चेति यवशास्त्रे चत्वारो दोषाः। एवं पूर्वं यवप्रयोगे व्रीहिशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणं यत्प्रामाण्यं तत्परित्यागः, अननुष्ठापकत्वलक्षणं यदप्रामाण्यं तत्स्वीकारः, पुनर्द्वितीयप्रयोगे व्रीह्यनुष्ठाने व्रीहिशास्त्रस्य त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति, व्रीहिशास्त्रे चत्वारो दोषाः। इत्यष्टदोषदुष्टो (१) विकल्पः।

सच विकल्पः क्वचिदेकार्थत्वात्, एककार्यकारित्वादित्यर्थः। यथा, व्रीहियवयोरेकैकस्य पुरोडाशनिष्पादनक्षमत्वाद्विकल्पः।

क्वचित् वचनवलात्; यथा—"वृहत्पृष्ठं भवति" इति वृहत्सामसाध्यं पृष्ठनामकं स्तोत्रं विहितम्, "रथन्तरं पृष्ठम्भवति" इति रथन्तरसामसाध्यं पृष्ठस्तोत्रान्तरं विधीयते।

स्तोत्रं च प्रयाजादिवदपूर्वार्थत्वादर्थकर्म्म। साम तु संस्कारकर्म्मत्वाद् गुणकर्म्म। स्तोत्रसाधनीभूतस्तोत्रीयाक्षराभिव्यक्तिरूपसंस्कारद्वारा साम्नां स्तोत्रसाधनत्वाङ्गीकारात्। प्रगीतमन्त्रसाध्यमिन्द्रादिगुणिनिष्ठगुणाभिधानं स्तोत्रम्। प्रगीतमन्त्रसाध्यं सामाभिव्यक्तऋगक्षरसाध्यमित्यर्थः। अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्। गानक्रियाविशेषः साम। स्तोत्रसाधनीभूता ऋचः स्तोत्रीयाः। तदेतत्त्रिवृत्पञ्चदशत्वादिसङ्ख्याविशेषः स्तोमः। इत्येतेषां भेदः।

तथाच वृहद्रथन्तरपृष्ठयोः भिन्नापूर्व्वार्थत्वेन एकार्थत्वाभावेऽपि

---

(१) एवमिष्टोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥
प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना।
तदुज्जीवनहानाभ्यां विकल्पेत्वष्टदोषता॥

'बृहद्वा पृष्ठं कार्य्यं, रथन्तरं वा पृष्ठं कार्य्यम्' इति वचनवलादेव विकल्पः।

क्वचित् व्यवस्थितविकल्पः—द्वितीयप्रयाजादिकर्म्मणि नराशंस-तनूनपान्मन्त्रयोः एकार्थत्वाद् विकल्पः। स च "राजन्यवसिष्ठादीनां(१)द्वितीयः प्रयाजस्तनूनपादन्येषाम्" इति वाक्याद् व्यवस्थित इति व्यवस्थितविकल्पः।

## वेदस्य प्रामाण्यविचारः

तदेवं चोदनाऽपरपर्य्यायाणां विधिवाक्यानाम् अंशत्रयविशिष्ट-भावनाविधायकत्वात् प्रामाण्यम्। उद्भिदादीनां नामतया, अर्थवादानां विधेयप्राशस्त्यपरतया, मन्त्राणामनुष्ठेयार्थस्मारकतया प्रामाण्यमिति कृत्स्नस्य वेदस्यालौकिके धर्म्माधर्म्माख्येऽर्थे प्रामाण्यं स्थितम्॥

## अथ स्मृत्यादिप्रामाण्यविचारः।

मन्वादिप्रणीतानां स्मृतीनामपि वेदमूलकत्वात्स्याद् अष्टकादौ धर्मे प्रामाण्यम्। "औदुम्बरी सर्व्वा वेष्टयितव्या" इतिस्मृतिरप्रमाणम्, "औदुम्बरीं स्पृष्ट्वोद्गायेद्" इतिप्रत्यक्षश्रुतिविरुद्धत्वात्। सर्ववेष्टने सति श्रुत्युक्तस्पर्शनस्य कर्त्तुमशक्यत्वात्। "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति" इत्यादिस्मृतिरप्रमाणम्। श्रुत्यर्थाविरुद्धत्वेऽपि लोभमूलकत्वात्।

तथा शिष्टाचारोऽपि स्मृतिद्वारा श्रुतिमूलकत्वात् प्रमाणम्।

---

(१) आदिपदात्कण्वपरिग्रहः। तेषां द्वितीयप्रयाजः नाराशंसपद-घटितमन्त्रसाध्यः। अन्येषां तनूनपात्-पदघटितमन्त्रसाध्यः। इत्येवं व्यवस्था।

मातुलसुतापरिणयनादिशिष्टाचारस्त्वप्र(१)माणम्। "मातुलस्य सुतामूढ्वा" इत्यादिस्मृत्या निषिद्धत्वेन स्मृतिविरुद्धत्वात्। तदेवं श्रुतिस्मृत्याचाराणां धर्म्माधर्म्मयोः प्रामाण्यमुक्तम्।

सच धर्म्मः परस्परं भिन्नः। भेदकप्रमाणानि तु शब्दान्त-(२)रादीनि।

## कर्मभेदनिरूपणम्।

तथाहि—यागदानहोमानां यजतिददातिजुहोत्यपरपर्यायशब्द-प्रतिपाद्यत्वाच्छब्दान्तराद्भेदः। स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दानम्।

---

(१) विशिष्टाचारस्त्वप्रमाणमित्युक्तिरस्य ग्रन्थकर्तुरेव शोभते माध-वस्तु, शतपथे दार्शिकप्रकरणे—"तस्मात् समानादेव पुरुषादत्ता चाद्यश्च जायते उत तृतीये संगच्छावहै चतुर्थे संगच्छावहै" इति अत्र कूटस्थादुत्पन्नयोर्भोक्तृभोग्ययोर्मिथः संकल्पोक्तिस्तृतीये इत्यादिका तद्वशाच-सापिण्ड्यसंकोच इत्युवाच।

एवं "आयाहीन्द्र पथिभिरिति" वह्वृचां मन्त्रे "तृप्ता जहुर्मातुलस्येव योषा भागास्ते पैतृष्वसेयी वपामिवेति" मातुलकन्यादेर्भागिनेयादिं प्रति भागत्वोक्त्या परिणयनसूचनात् सापिण्ड्यसंकोचाङ्गीकारेण मातुलकन्या-दिपरिणयने इदं मन्त्रलिङ्गमपि साधकम्। इदं च मातुलस्य सुतामूढ्वा इत्यादि स्मृत्यपेक्षया वलवदिति बलाबलाधिकरणवार्तिके व्याख्यावसरे न्यायसुधाकर उक्तवान्। 'वेदाच्चैतत् प्रतीयते' इत्यत्र सर्वनाम्ना पूर्वार्द्ध-निर्दिष्टदेशकुलानुसारिण एव सापिण्ड्यसंकोचस्य परामर्शात्तदनुसरणमपि वेदोक्तमिति ज्ञाप्यते। तथा च स्वकुलदेशाविरोधिनो मातुलदुहितृपरिण-यनादेरुक्तविधयानेकश्रुतिस्मृतिसिद्धत्वात् प्रामाण्यं सिद्धम्।

(२) अभ्याससंख्यासंज्ञागुणनामधेयप्रकरणान्तराणि आदिपदाद् ग्राह्याणि।

"समिधो यजति" इत्यादीनां पञ्चानां वाक्यानां मध्ये एकस्य कर्म्मविधायकत्वमन्येषां तस्मिन् कर्म्मणि गुणविधायकत्वमित्यत्र नियामकाभावात्सर्वेषां सर्वविधायकत्वे स्थिते विहितस्य कर्म्मणः पुनर्विधानं व्यर्थमिति पुनर्विधानसामर्थ्यात् पूर्ववाक्यविहितकर्मापेक्षयोत्तरोत्तरवाक्यविहितस्य कर्म्मणो भेदः सिध्यतीत्येतादृशस्थलेष्वविशेषपुनःश्रुतिरूपाद्यजतिपदाभ्यासात् कर्मभेदः।

"तिस्र आहुतीर्जुहोति" इत्यत्र जुहोतिपदाभ्यासाभावेऽपि जुहोतीत्यर्थे होमे त्रित्वसङ्ख्याऽन्वयात्परस्परं भिन्नास्त्रयो होमा इति सङ्ख्याऽत्र कर्म्मभेदः।

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत" इति ज्योतिष्टोमप्रकरणे श्रुतानामपि ज्योतिराख्यानां त्रयाणां यागानां ज्योतिष्टोमसंज्ञाऽपेक्षया पृथक् संज्ञाकरणात् ज्योतिष्टोमापेक्षया भेदः। भिन्नसंज्ञावशादेव त्रयाणां परस्परं भेद इति संज्ञया कर्म्मभेदः।

तथा "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र "वैश्वदेवी" इतिवाक्ये विश्वदेवदेवताऽऽमिक्षाद्रव्यसम्बन्धानुमितो यागो विधीयते। "वाजिभ्यो वाजिनम्" इत्यत्रापि वाजिदैवत्य–वाजिनद्रव्यकं कर्मान्तरं विधीयते। न तु पूर्वविहिते वैश्वदेवयागे वाजिनद्रव्यरूपो गुणो विधीयते पूर्व्वयागस्याऽऽमिक्षागुणावरुद्धत्वेन तत्र वाजिनस्य निवेशायोगात्। न च व्रीहियववद्विकल्पः। वाजिनामिक्षयोः समशिष्टत्वाभावात् विषमशिष्टयोर्विकल्पायोगात्। वैश्वदेवयागोत्पत्तिवाक्ये एवामिक्षागुणः शिष्यत इत्युत्पत्तिशिष्टः। शिष्यते विधीयते इत्यर्थः। वैश्वदेववाक्यादुत्पन्ने कर्म्मणि वाक्यान्तरेण शिष्टो विहितो वाजिनगुण उत्पन्नशिष्टः। तयोर्मध्ये ह्युत्पत्तिशिष्टः प्रबलः, कर्मोत्पत्तिवेलायामेव

कर्माङ्गत्वेन प्राप्तत्वात्। उत्पन्नशिष्टो वाजिनगुणोऽनन्तरं प्रमितोऽपि विलम्बितत्वेन दुर्वलत्वात् तत्पूर्वकर्म्मणि निवेशमलभमानो वाजि-रूपदेवतान्तरसम्बन्धात् स्ववाक्यस्य कर्मान्तरविधायकत्वमानयतीति गुणाद्भेदः। तत्र घनीभूतं पय आमिक्षा, शिष्टं जलं वाजिनम्।

तथा कुण्डपायिनामयने श्रूयते—"उपसद्भिश्चरित्वा मास-मग्निहोत्रं जुहोति" इति। अत्र पूर्वं कर्म्म किञ्चिदपि सन्निहितं न भवति अपूर्वकर्मसन्निधानरूपात् प्रकरणान्तरात् प्रसिद्धा-ग्निहोत्रधर्म्मकं तन्नामकं कर्मान्तरं विधीयते। नत्वग्निहोत्रशब्देन प्रसिद्धाग्निहोत्रमनूद्य गुणविधिः। प्राप्ते कर्म्मणि आनन्तर्य—मासरूपानेकगुणविधौ वाक्यभेदापत्तेरिति प्रकरणान्तरादत्र कर्म्मभेदः। प्रसिद्धाग्निहोत्रं नैयमिकाग्निहोत्रम्—नित्याग्निहोत्रमिति यावत्। तदेवं शब्दान्तरा—भ्यास—सङ्ख्या—संज्ञा—गुण—नामधेय—प्रकरणान्तरैः कर्म्मभेदो दर्शितः॥

## अथ प्रमेयादिविचारः।

तत्र वेदादिप्रमेयोऽर्थस्त्रिविधः—क्रत्वर्थः, पुरुषार्थः, उभयार्थश्चेति। तत्र प्रयाजादिकं केवलं क्रत्वर्थः, फलं तत्करणं च पुरुषार्थः, यथा—ज्योतिष्टोमादिः स्वर्गश्च। दध्यादि तूभयरूपम्—"दध्ना जुहुयाद्" इति फलासंयुक्तवाक्येन क्रत्वर्थत्वात् "दध्नेन्द्रियकामस्य जुहुयात्" इत्यनेन फलाय विधानात् पुरुषार्थत्वात्। तदुक्तम्—"एकस्य तूभय-रूपत्वे संयोगपृथक्त्वम्" इति (पू० मी० अ० ४ पा० ३ अधि० ३३ सू० ३)।

संयोगो वाक्यं तस्य पृथक्त्वं भेदः एकस्य उभयार्थत्वे नियामक इत्यर्थः।

क्रत्वर्थे प्रयाजादौ क्रतुः प्रयोजकः। पुरुषार्थे फलं प्रयोजकम्। प्रयोजकत्वं नामानुष्ठापकत्वमित्यर्थः।

विधिर्यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः । दर्शादिविधिः स्वर्गार्थं दर्शादिकमनुष्ठापयतीति स्वर्गादिर्दर्शादौ प्रयोजकः । प्रयाजादिविधिः प्रयाजान् दर्शाद्यर्थम् अनुष्ठापयतीति दर्शादिः प्रयाजानां प्रयोजकः । दध्यानयनविधिः दध्यानयनमामिक्षार्थमनुष्ठापयति, न वाजिनार्थम्, आमिक्षार्थं दध्यानयनानुष्ठाने सति वाजिनस्य स्वतः सिद्धत्वात्, अत आमिक्षैव दध्यानयने प्रयोजिका, न वाजिनम् । "पुरोडाश-कपालेन तुषानुपवपति:" इति तुषोपवापाङ्गत्वेन पुरोडाशकपालं विधीयते, तथापि तुषोपवापः कपालस्य प्रयोजको न भवति, पुरोडाशार्थमुपात्तेनैव कपालेन तुषोपवापसिद्धेः । किन्तु पुरोडाश एव कपालस्य प्रयोजक इत्याद्यूह्यम् ॥

## अथ क्रमनिरूपणम् ।

ननु विधिना साङ्गं प्रधानं कर्त्तव्यतया चोद्यते । तत्राङ्गानां प्रधानानां च कर्म्मणां बहुत्वात् क्रमेणानुष्ठानं वाच्यम् । तत्क्रमनियामकं प्रमाणं किम् ? इति चेत्, न (१) श्रुत्यादीनामेव क्रमनियामकत्वात् ।

---

(१) आदिना अर्थपाठस्थानमुख्यप्रवृत्त्याख्यानामुपलब्धिः । तत्र क्रमपरवचनं श्रुतिः । तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरञ्चेति । तत्र वेदं कृत्वा वेदीं करोतीति केवलक्रमपरं वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । स्वयं केवलक्रमपरोदाहरणमाह अध्वर्य्युरिति ।

यत्र प्रयोजनवशेनार्थनिर्णयः सोऽर्थक्रमः । एवं पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः स्थानं नामोपस्थितिः । प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः ।

सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः-श्रुत्यादीनामेषां समवाये पारदौर्बल्यमपि पूर्ववद् ज्ञेयम् । इति ।

तथाहि—"अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यत्र क्त्वाश्रुत्या गृहपतिदीक्षाऽनन्तरं ब्रह्मदीक्षेति श्रौतक्रमः।

"समिधो यजति" "तनूनपातं यजति" इत्यादौ विधिवाक्यपाठक्रमादेव समिदादियागानुष्ठानक्रमः।

"अग्निहोत्रं जुहोति यवागूं पचति" इत्यत्र यवागूपाकस्य होमार्थत्वेन पाकात् पूर्वं होमस्य कर्त्तुमशक्यत्वात् पाठक्रमं त्यक्त्वाऽऽर्थक्रमः स्वीकर्तव्यः। अर्थः प्रयोजनं होमादिरूप तदर्थं क्रमः, अर्थक्रमः। तेन पूर्वं पाकः पश्चाद्धोमः॥

तथा "सप्तदश प्राजापत्यान् पशूनालभते" इत्यत्र सप्तदशपशुद्रव्यकप्रजापतिदेवताकाः सप्तदश यागाः कर्त्तव्यत्वेन बोधिताः। तत्रोपाकरणाख्य आद्यः पदार्थः यतः कुतश्चिदारभ्य यत्र कचित् समापनीयः, नियोजनादिकन्तु येन क्रमेण उपाकरणं प्रवृत्तं तेनैव क्रमेण कर्त्तव्यम्। कथम्—प्रकृतावग्नीषोमीयपशोरेकत्वेन उपाकरणमादौ कृत्वा द्वितीयक्षणे एव नियोजनं तृतीयक्षणे एव प्रोक्षणम्, व्यवधानप्रयोजकाभावात्। अत्र तु सप्तदशपशूनां सहानुष्ठेयत्ववचनात् प्रथमतो यत्र कचित् पशौ कृतमुपाकरणं स्वाश्रयकर्त्तव्यनियोजनाय षोडशभिः क्षणैः व्यवधानं सहते न त्वधिकम्। तत्रोपाकरणक्रमेण नियोजनं प्रथमपशावकृत्वा पश्वन्तरे नियोजनं कृत्वाऽनन्तरं प्रथमपशौ नियोजनकरणे षोडशक्षणाधिकक्षणव्यवधानं शास्त्राननुमतमापद्यते, तन्निरासायोपाकरणं येन क्रमेण प्रवृत्तं तेनैव नियोजनादिकं कार्य्यमिति प्रवृत्तिक्रमः।

तथा ज्योतिष्टोमे औपवसथ्यमहरारभ्य क्रमेणानुष्ठेयानाम् अग्नीषोमीयसवनीयानुबन्ध्यानां पशूनां त्रयाणां साद्यस्काख्ये सोमयागे "सह पशूनालभते" इत्येकदाऽनुष्ठानलक्षणं साहित्यं बोधितम्। तदपि सवनीयस्य स्थाने विहितम्। तत्र प्राकृतक्रमं परित्यज्य

सवनीयस्य स्थाने साहित्यावधानादादौ सवनीयपशोरुपाकरणे ततोऽग्नीषोमीयस्य ततोऽनूबन्ध्याया इति स्थानात् क्रमः । सुत्यादिवसात् पूर्वमहरौपवसथ्यम् ।

तथा दर्शे सान्नायधर्माणां शाखाच्छेदादीनां पूर्वम्, आग्नेयधर्माणां निर्वापादीनाञ्चानन्तरं प्रवृत्तावपि मुख्ययोराग्नेयसान्नाय्ययागयोर्मध्ये आग्नेययागस्य पूर्वमनुष्ठानान्मुख्ययागक्रमेणादावाग्नेयपुरोडाशस्य प्रयाजशेषाभिघारणम्, ततः पयसोऽभिघारणम् इति मुख्ययागक्रमादभिघारणक्रमः। इत्येवं श्रुति–अर्थ–पाठ–स्थान–मुख्य–प्रवृत्तिक्रमैरेव कर्मानुष्ठानम्। अन्य(१)थाऽनुष्ठाने वैगुण्यमित्य(२)लम्।

इति श्रीकृष्णयज्वकृता मीमांसा-
परिभाषा समाप्ता ।

—:❀:—

(१) श्रुत्यादिप्राप्तक्रमवैपरीत्येन ।

(२) अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम् ।
कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ।
इति श्रीकृष्णभगवद्वाक्याश्रयसमाश्रिताः ।
मीमांसकाः समाख्याताः कर्मवादपरायणाः ॥
वासुदेवः स भगवान् प्रीयतामर्पयाम्यहम् ।
'यत्करोषीति' तद्वाक्यं स्मृत्वेमां दीपिकां लघुम् ॥

इति श्रीसरयूपारीणब्राह्मणान्वयज–च्छपरामण्डलान्तर्गत–जगन्नाथपुराभिजनेन क्षेमधरिणा साहित्याचार्य्यन्यायतीर्थव्याकरणशास्त्रिणा दर्शनकेशरिणा श्रीगोपालशास्त्रिणा त्रिपाठिना विरचिता लघुदीपिकानाम्नी मीमांसापरिभाषाव्याख्या समाप्ता,
तया भगवान् सर्वात्मा प्रीयताम् ।

इति शिवम् ।

—:❀:—

* श्रीकृष्णः शरणं मम *

हिन्दी दीपिका।



संस्कृतज्ञ विद्वान, मीमांसा-तत्त्वज्ञ हों।
अरु होवे वरदान, 'केशरि' ज्ञान-विशुद्ध हों॥



पढ़ते सभी हैं शास्त्र पर रुचि है नहीं इसकी तरफ।
जिससे अधूरा ज्ञान रह जाता सभी को हर तरफ॥
होता वही विद्वान जो पद-वाक्य-प्रामाण्यज्ञ हो।
होगा न वाक्य-ज्ञान तब तक, जब न मीमांसज्ञ हो॥



मीमांसा के ज्ञान के, जिज्ञासु जो छात्र।
भाषा परिभाषा पढ़ें, पुलकित होवे गात्र॥

१ कृष्णयज्वा नाम के पण्डित ने, अपने पिता सूर्य्यनारायण और माता त्रिपुरसुन्दरी तथा जिनसे उन्होंने मीमांसा के तत्त्वार्थ समझे थे, उन गुरुदेव को निरन्तर नमस्कार कर, जो बुद्धिमान् तो हैं, पर मीमांसा में बालक हैं, उनको मीमांसा-शास्त्र के सिद्ध अर्थ को

सूक्ष्मतया ज्ञान कराने के लिये यह मीमांसापरिभाषा नाम की पुस्तक लिखी है।†

## २ धर्माधर्म का विचार।

१२ बारह अध्याय की पूर्व मीमांसा शास्त्र में महर्षि जैमिनि ने अनुष्ठान के उपयोगी होने के कारण धर्म और अधम का ही विचार किया है। उसमें 'जिसकी इष्ट साधनता वेद से ज्ञात होती हो'। ३ (अर्थात् यह कार्य्य तुम्हारे इष्ट=अभिलषित का साधक=पूरा करनेवाला है, ऐसा जिसके लिये वेद कहे वही धर्म है।) जैसे—यज्ञ होम दान है। वेद से जिसकी अनिष्ट साधना प्रतीत होती हो वह अधर्म है। (अर्थात् जिसके लिये वेद कहता हो कि, यह कार्य्य तुम्हारा अनिष्ट करेगा) वही अधर्म है। जैसे—तमाकू या विषैले बाण से मारे हुए जानवर के सूखे मांस का खाना।

उस धर्म अधर्म के बताने में वेद, स्मृति और शिष्टाचार ये ४ तीनों प्रमाण माने जाते हैं। उनमें वेद स्वतंत्र प्रमाण है। स्मृति और शिष्टाचार यदि वेद मूलक हों (या वेद से विरुद्ध न पड़ते हों) तब प्रमाण हैं (अन्यथा नहीं।)

---

†इस मङ्गल श्लोक में 'सूर्य्य' और 'नारायण' तथा 'देवी' और 'त्रिपुर-सुन्दरी' ये शब्द देवता वाची भी हैं, अतः इनका उच्चारण भी अभ्यु-दयकारी है।

"देवतावाचकाः शव्दा ये च भद्रादिवाचकाः।
ते सर्वेऽभ्युदयं दद्युः पठिता लिखिता अपि"॥

मीमांसा जैमिनीयपूर्वमीमांसा परिभाष्यते सुव्यक्तीक्रियतेऽनया। इति मीमांसापरिभाषा।

मीमांसापरिभाषा = पूर्व मीमांसा, लक्षण उदाहरणादि द्वारा सुव्यक्त जिस पुस्तक से की जाय।

## वेद-द्वैविध्य विचार।

उनमें वेद दो प्रकार के हैं। एक संहिताभाग दूसरा ब्राह्मण-भाग। उनमें (यज्ञ के) प्रयोग के समय अर्थ स्मरण कराने में मन्त्रों का उपयोग होता है, यह आगे कहेंगे।

यहां प्रयोग का अर्थ अनुष्ठान है। 'उस समय में' ऐसा अर्थ करना चाहिये। यज्ञ इत्यादि को बताने वाले वाक्य ब्राह्मण कहे जाते हैं। उसी ब्राह्मण का अङ्ग अर्थवाद है। (क्योंकि) वह (अर्थवाद) ब्राह्मण द्वारा बताये गये कार्य्यों की प्रशंसा या निन्दा करके (ब्राह्मण के) विधिवाक्यों के साथ मिलाकर (धर्म अधर्म बताने में) प्रमाण होता है यह आगे कहेंगे।

## ब्राह्मणवाक्योंका अनेकत्ववर्णन।

वे ब्राह्मण वाक्य अनेक प्रकार के हैं—१ कर्मोत्पत्ति-वाक्य, २ गुण-वाक्य, ३ फल-वाक्य, ४ फलाय गुणवाक्य, ५ सगुणकर्मोत्पत्ति-वाक्य इत्यादि उनके भेद हैं।

## कर्मोत्पत्तिवाक्य विचार।

जिस वाक्य से "यह कर्म करने योग्य है" ऐसा प्रतीत हो उसे ही 'कर्मोत्पत्ति—वाक्य' कहते हैं। जैसे—'अग्निहोत्रं जुहोति' इस वाक्य से अग्निहोत्र होम करना चाहिये ऐसा विधान होता है इस हेतु यह कर्मोत्पत्ति वाक्य है।

## गुण—वाक्य विचार।

(उत्पत्ति वाक्य द्वारा) विहित कर्म के अङ्गरूपसे द्रव्य और देवता प्रभृति को बतानेवाले वाक्य को गुण-वाक्य कहते हैं। जैसे—'दध्ना जुहुयात्' यह वाक्य (पूर्वोक्त) होम को उद्देश्य करके उसका अङ्ग दधि को बताता है, इसलिये यह गुण वाक्य है। कर्म के अङ्ग रूप से जो विहित हो उसे गुण कहते हैं। वह यहां 'दधि' है (अतः

वह गुण हुआ। उसे बतानेवाला वाक्य गुण वाक्य हुआ।) होम यहां उद्देश्य है क्योंकि—

उद्देश्य उसे कहते हैं जो 'दूसरे प्रमाण से प्राप्त होकर विधेय में अन्वित रूप से निर्दिष्ट हो'। वही अनुवाद्य भी है क्योंकि—'दूसरे प्रमाण से प्राप्त को फिर से कथन कर दिया जाय तो वह अनुवाद्य हो जाता है। और दधि प्रभृति गुणों में अन्वित होने से प्रधान भी वही है। और इसी वाक्य में दधि किसी दूसरे प्रमाण से प्राप्त न होने के कारण विधेय है। होम के साधन होने से उसकी अपेक्षा गुण है। पुरुष से अनुष्ठान किये जाने के कारण उपादेय भी है। यहां पर दूसरे प्रमाण से प्राप्त माने दूसरे प्रमाण से ज्ञात ऐसा अर्थ करना चाहिये। और अप्राप्त माने अज्ञात समझना चाहिये।

(इस प्रकार यहां 'होम' में (१) उद्देश्यत्व, (२) अनुवाद्यत्व, (३) और प्राधान्य रहा। दधि में (१) विधेयत्व, (२) उपादेयत्व, और (३) गुणत्व रहा।)

## फल वाक्य विचार।

(उत्पत्ति विधि से) बताये गये कर्म की फलाकांक्षा उत्पन्न होने पर फल के साथ सम्बन्ध बतानेवाली विधि 'फलविधि' कहाती है। जैसे—"अग्निहोत्रं जुहुयात् स्वर्गकामः" इस वाक्य से 'जो स्वर्ग चाहता है वह उसका साधक अग्निहोत्र नामक होम करे' ऐसा अग्निहोत्र वाक्य से ज्ञापित कर्म का फल से सम्बन्ध विधान प्रतीत होता है। अतः यह वाक्य फलवाक्य कहा जायगा।

६

## फलाय गुण वाक्य विचार।

पूर्व प्राप्त कर्म को आश्रय करके फल के लिये किसी गुण का विधायक वाक्य 'फलाय गुण वाक्य' कहाता है। जैसे—'दध्नेन्द्रिय-कामस्य जुहुयात्' इससे, अग्निहोत्र वाक्य से प्राप्त होम का आश्रय

लेकर इन्द्रिय रूप फल के लिये 'दधि' रूप गुण का विधान होता है। अर्थात् होम के आश्रित ( साधन ) दधि से इन्द्रिय रूप फल सिद्ध करे। यहां होमाश्रित का अर्थ होम का साधन ऐसा करना चाहिये इसी को 'गुणफलविधि' 'गुणकामविधि' भी कहते हैं।

## सगुण कर्मोत्पत्ति वाक्य विचार।

द्रव्य और देवता प्रभृति गुणों के साथ साथ कर्म का विधयक वाक्य 'सगुण कर्मोत्पत्ति वाक्य' कहाता है। जैसे 'सोमेन(१)यजेत' इस वाक्य में सोमलता (यज्ञ का साधक वस्तु) के साथ साथ याग का भी विधान है। विशिष्ट के विधान करने से विशेषण अर्थात् ही विहित हो जाता है।

## सफल कर्मोत्पत्ति वाक्य विचार।

कहीं तो कर्म का विधायक वाक्य ही फल का भी सम्बन्ध बताता है। जैसे—'उद्भिदा यजेत पशुकामः' इस वाक्य में उद्भिद् नामक यज्ञ किसी दूसरे वाक्य से विहित न होकर पशु चाहनेवाले को पशुरूप फल के लिये विहित हुआ है। इस प्रकार यह एक ही वाक्य फल और उसका साधक याग दोनों का विधायक है।

## प्रयोगविधि विचार।

७

अङ्ग विधियों के साथ एकवाक्यता द्वारा महावाक्यता को

(१) 'सोमेन यजेत' इस वाक्य में यदि गुणमात्र 'सोमलता' को विधान करते हैं तो कर्म का विधान नहीं होगा। यदि कर्म के विधान 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इस वाक्य से मानेंगे तो वाक्यभेदरूप बड़ा दोष आ पड़ता है। अतः यहां ही इसी वाक्य को उत्पत्ति विधि और गुण विधि दोनों मानकर सोमलता सहित याग के विधान मानने से लक्षणारूप अल्प दोष ही पड़ा। वाक्यभेद रूप बड़ा दोष नहीं पड़ा। और 'सोमवता यागेन इष्टं भावयेत्' ऐसा शाब्दबोध हुआ।

प्राप्त होकर सभी अङ्गों के साथ प्रधान प्रयोग के विधायक हो जाने से प्रधान विधि को ही प्रयोग विधि कहते हैं। जैसे—'अग्निहोत्रं जुहुयात् स्वर्गकामः' यहां पर 'अग्निहोत्र होम से स्वर्ग को सिद्ध करे, ऐसा अर्थ प्रतीत होता है। इस होम से किस प्रकार स्वर्ग सिद्ध करें ऐसी आकांक्षा होती है। जैसे—'कुल्हाड़ी से दो टुकड़े करे ऐसा कहने पर 'किस प्रकार इससे दो टुकड़े करें' ऐसी आकांक्षा होने पर 'हांथ से कुल्हाड़ी को वेग से उठाकर फिर लकड़ी पर वेग से गिरा कर' ऐसी प्रतीति होती है। उसी प्रकार यहां भी 'अग्निं प्रणयति' 'अग्नि के पास जलयुक्त प्रणीता रखे' 'अग्निषु समिध आदधाति' 'अग्नि में इन्धन डाले' इत्यादि अङ्गविधियों से प्राप्त प्रणीता स्थापन इन्धन प्रदान आयतन शोधन प्रभृति अङ्ग समुदाय से होने वाले उपकारयुक्त अग्निहोत्र होम से स्वर्ग सिद्ध करे। इस प्रकार प्रकरण द्वारा पूरे किये गये होमवाक्य से स्वर्ग के लिये अङ्गप्रत्यङ्ग सहित अग्निहोत्र प्रयोग विहित किया जाता है। इस लिये यह प्रयोगविधि हुई। उसी अङ्ग समुदाय को 'इत्थंभाव' ८ और 'इतिकर्तव्यता' भी कहते हैं। यहां प्रधान अग्निहोत्र होम है। प्रणयन प्रभृति सब अङ्ग हैं।

## फलापूर्व विचार।

(१)बहुत जल्द नष्ट हो जाने वाले कर्म दूसरे समय में उत्पन्न होने वाले स्वर्ग के साधक कैसे हो सकते हैं? इस प्रश्न के उत्तर में

(१) यह शङ्का इस लिये होती है कि 'ययोरेव सामानाधिकरण्यं तयोरेव कार्यकारणभावः' जिनको आपस में ऐकाधिकरण्य रहता है उन्हीं का कार्य्यकारण भाव होता है। और कार्य्यकारण को एक समय रहना चाहिये। यदि कारण, कार्य्य पैदा होने से पहले ही नष्ट हो जायगा, तो वह कार्य्य क्या पैदा करेगा। इसीलिये फलापूर्व मानने की आवश्यकता पड़ती है। जो फल उत्पन्न होने तक उसी आत्मा में रहता है, जिसने यज्ञ

मीमांसकों का यह कहना है कि, विहित और निषिद्ध कर्म अपने अपने फल अवश्य देते हैं, ये बातें जब उन उन वाक्यों से निश्चित हैं, तब उन जल्द नष्ट हो जाने वाले कर्मों को दूसरे समय में होने वाले फलों के साधन बनने के लिये फल और उन कर्मों के बीच उन कर्मों से उत्पन्न पुण्य पाप रूप अपूर्व माना जाता है। जिससे याग प्रभृतिकर्म, उसी अपूर्व द्वारा स्वर्गादि का साधक होते हैं, साक्षात् नहीं। उसी १ को फलापूर्व कहते हैं। इस फलापूर्व का कारण, पहले और पीछे होने वाले सभी अङ्गों के साथ, प्रधान होता है। केवल प्रधान याग ही नहीं होता, यदि ऐसा मानेंगे तो प्रधान से उत्पन्न अपूर्व ने ही फल पैदा कर दिया फिर बेचारे अङ्ग तो व्यर्थ हो जायंगे ?

## उत्पत्त्यपूर्वों के द्वारा साहित्य सम्पादन ।

अब यह कहते हैं कि, प्रधान याग ज्योंही हुआ त्योंहीं तो नष्ट हो जाता है, तो फिर उसे अङ्गों से साथ कैसे होगा कि, वह उनसे मिलकर 'फलापूर्व पैदा करेगा ? इसके उत्तर में मीमांसक यह कहते हैं कि, यद्यपि प्रधान कर्म नष्ट तो हो जाता है, पर वह एक अपना उत्पत्त्यपूर्व उत्पन्न कर जाता है। उसी प्रकार वे अंग भी अपने अपने उत्पत्त्यपूर्व पैदा करके नष्ट होते जाते हैं। इस प्रकार इन्हीं उत्पत्त्यपूर्वों के द्वारा वे अंग भी आपस में मिलकर प्रधान के उपकारी होते हैं। और प्रधान भी अपने उत्पत्त्यपूर्व द्वारा अंगों के साथ मिलकर फलापूर्व पैदा करता है।

## अङ्गों की प्रधानोपकारिता ।

तो फिर अङ्गों को प्रधान का उपकार करना यही है कि, उसे

---

किया था। इस प्रकार ऐकाधिकरण्य भी होता है। क्योंकि जिसमें वह फलापूर्व है, उसी को फल भोगना है। और जिस समय फल उत्पन्न होगा उससे अव्यवहित पूर्वकाल में फलापूर्व भी रहता ही है।

फलापूर्व पैदा करने में समर्थ बना देना। 'दर्श' और 'पौर्णमास' याग में तो ( अपूर्वोत्पत्ति के विषय में ) कुछ विलक्षणता है। ( क्योंकि वहां तीन तीन यागों से एक एक अपूर्व उत्पन्न होता है। ) उसीको दिखाने के लिये भूमिका बांधते हैं कि, 'यदाग्नेयोऽष्टाकपालोऽमावा-
१० स्यायाम्' इत्यादि वाक्य से आग्नेय याग विहित होता है। 'ताभ्यामित्यादि' वाक्य से अग्निषोमीय याग विहित है। उपांशु० इत्यादि वाक्य में आया हुआ उपांशु याग 'तावब्रूतामित्यादि वाक्य से पूर्णमासी में विहित होता है। इस प्रकार तीन याग पौर्णमासी में प्रधान याग हैं। इन तीनों यागों को उन उन वाक्यों से पौर्णमासी रूप एक काल से सम्बन्ध देखकर उसी निमित्त से उन तीनों का 'य एवं विद्वान्' प्रभृति विद्वद् शब्दयुक्त वाक्य में एकवचनान्त 'पौर्णमासी' इसी एक शब्द से अनुवादरूप में सामान्यतया कथन किया गया है। इससे यह समझना चाहिये कि वेद में जहां कहीं भी पौर्णमासी शब्द आवेगा वहां आग्नेय अग्निषोमीय और उपांशु ये तीनों याग समुदाय रूप से लिए जायँगे।

## ११ वाक्य में यागवाचक प्रयोग न होने पर भी— याग विधान होता है।

यहाँ यह शंका होती है कि, 'यदाग्नेय' इत्यादि वाक्य में याग वाचक पद न रहने पर याग का बोध कैसे हो सकता है? इसके उत्तर में मीमांसक कहते हैं कि, ऐसा न कहो, क्योंकि यहाँ 'अग्नि देवता है जिस पुरोडाश का' इस अर्थ में जो आग्नेय शब्द में देवतार्थक तद्धित 'ढक्' प्रत्यय हुआ है। और पुरोडाश शब्द से उसका सामानाधिकरण्य सम्बन्ध होने से अग्नि देवता और पुरोडाश द्रव्य इन दोनों का जो सम्बन्ध प्रतीत हो रहा है। सो विना याग के बैठ ही नहीं सकता। क्योंकि द्रव्य और देवता का सम्बन्ध याग ही में

होता है। दूसरी क्रिया में हो नहीं सकता। इसलिये याग ही के साथ उनका सम्बन्ध मानना पड़ेगा। क्योंकि देवता को उद्देश्य करके द्रव्य त्याग को ही तो याग कहते हैं। इसलिये यहां शब्दोपात्त द्रव्य और देवता के सम्बन्ध से अनुमान किया गया 'याग', कल्पित 'यजेत' पद से अवश्य विहित होगा। इसका निष्कर्ष यह हुआ कि, 'अग्नि देवता वाले पुरोडाश द्रव्य वाले अमावस्यादि समय में होने वाले यज्ञ से अपना इष्ट सिद्ध करे। इसी प्रकार जहां कहीं भी द्रव्य और देवता का ही केवल सम्बन्ध शब्दगम्य हो जैसे 'सौर्य्यं चरुं निर्वपेत्' (सूर्य्य देवता सम्बन्धी चरु का निर्वाप करे) इत्यादि वाक्यों में सूर्य्य देवता और चरु के सम्बन्ध से अनुमित याग का विधान होता ही है। इसलिये यहाँ भी कोई हानि नहीं।

## लिङ् प्रभृति लकारों के न रहने पर भी-विधि का बोध होना।

फिर शङ्का होती है कि 'उपांशु' यागबोधक वाक्य 'उपांशुयागमन्तरा यजति' में यजधातु तो है पर विधिबोधक लिङ्प्रभृति प्रत्यय तो नहीं है। फिर विधि का भान कैसे होगा। इसके उत्तर में कहते हैं कि 'यजति' को 'यजेत' रूप में परिणाम करके विधि का बोध हो सकता है। इसलिये इसमें कोई हानि नहीं है। इसी प्रकार 'व्रीहीन् प्रोक्षति' 'समिधो यजति' इत्यादि वाक्यों में भी लट् की जगह में लिङ् का परिणाम जानना चाहिये।

किसी का मत है कि 'यजति' यही पञ्चम 'लेट्' लकार का रूप है, जिसका अर्थ विधि है, फिर तो परिणाम करने की भी आवश्यकता नहीं है। (प्रसङ्ग प्राप्त शङ्का का समाधान करके फिर अपूर्व का विषय चला)

इसी प्रकार 'ऐन्द्रं दध्यमावास्यायां' 'ऐन्द्रं पयोऽमावास्यायां' इन, दो वाक्यों से विहित सान्नाय याग, याने दधियाग, और पयोयाग और १२ 'यदाग्नेयोऽष्टा०' इस वाक्य से विहित आग्नेय याग। ये तीनों याग अमावास्या में प्रधान हैं। इन तीनों यज्ञों को 'य एवं विद्वान्०' इत्यादि वाक्य से 'अमावास्यां' ऐसा द्वितीयान्त अमावास्या शब्द से एक समुदायरूप से अनुवाद कर दिया गया। इस प्रकार वेद में जहां कहीं भी 'अमावास्या' या 'दर्श' शब्द आवेगा वहां इन तीनों यज्ञों का बोध हुआ करेगा।

विद्वत् शब्दयुक्त वाक्यमें इन तीनों तथा उन तीनों को भी एक अमावास्या और पौर्णमासी शब्द से समुदायरूप में पूकारने का तात्पर्य्य है कि, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि वाक्यों में द्विवचनान्त प्रयोग हो सका है। नहीं तो आग्नेय प्रभृति छः यज्ञों के पृथक् पृथक् ज्ञान होनेसे 'दर्शपूर्णमासैः' ऐसा बहुवचन प्रयोग होता।

जो दूसरे प्रमाण से ( पहले ) प्राप्त हो, पर फिर किसी प्रकार उसका उल्लेख करना पड़े उसे ही अनुवाद कहते हैं।

फल वाले आग्नेयादि यागों के साथ कहे गये प्रयाज्य, आज्यभाग और अनुयाज प्रभृति, इन छः यज्ञों के अङ्ग हैं।

### अब तीनों के अपूर्व की उत्पत्ति बताते हैं।

ऐसी अवस्था में 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इसका अर्थ यही होगा कि, 'दर्श और पौर्णमास नामक याग परस्पर मिले हुए समुदाय द्वारा स्वर्गजनक अपूर्व पैदा करें।

यदि यह कहो कि, दो ( भिन्नभिन्न ) समय में होने वाले दो समुदाय में परस्पर साहित्य ( मेल ) कैसे हो सकता है ? तो ऐसी आकांक्षा होने पर उत्तर में कहते हैं कि, स्वरूपतः मेल न भी हो परन्तु उन तीन तीन समुदायों से जो एक एक अपूर्व पैदा होता है। उन दोनों अपूर्वों द्वारा दोनों समुदायों का मेल हो जाता है।

१३ अब कहते हैं कि, एक एक त्रिक से भी ( अर्थात् तीन तीन लेकर जो एक एक समुदाय बना है उससे भी ) एक एक अपूर्व कैसे हो सकता है ? ऐसी आकांक्षा में कहते हैं कि प्रयाज अनुयाज प्रभृति पहले और पीछे होने वाले अङ्ग समूह युक्त एक एक त्रिक समुदायापूर्व पैदा करेगा। ऐसा समझना चाहिये।

एक एक त्रिक का भी स्वरूपतः सब अङ्गों के साथ मेल नहीं हो सकता इसलिये तीनों यागों से अलग अलग तीन उत्पत्ति ( नामका ) अपूर्व पैदा होते हैं। उनके द्वारा सभी अङ्गों के साथ मेल हो सकता है।

इसी प्रकार प्रयाजादि अङ्गों का भी स्वरूपतः प्रधान के साथ साहित्य मेल नहीं हो सकता, परन्तु उनके उनके उत्पत्तिनामक अपूर्वों द्वारा साहित्य समझना चाहिये।

इससे यह समझना चाहिये कि प्रधान याग से उत्पन्न उत्पत्तिनामक अपूर्वों के, प्रयाजादि अङ्गों से उत्पन्न उत्पत्तिनामक अपूर्वों के साथ जो मेल है, वही प्रधानों के अङ्ग विशिष्टत्व रूप साङ्गता है। अर्थात् प्रधानों को अङ्गो से सहायता क्या है? मानो उनके ( प्रधानों के ) अपूर्वों को उनके (अंगों के) अपूर्वों से सहायता है।

निष्कर्ष यह निकला कि, पौर्णमास याग में आग्नेय प्रभृति तीन प्रधान यागों से उत्पन्न तीनों अपूर्वों से प्रयाज प्रभृति अंगों से उत्पन्न उत्पत्ति नामक अपूर्वों के साथ होनेसे एक समुदाय (त्रिक) जन्य अपूर्व पैदा होता है। इसी प्रकार दर्श याग में भी आग्नेय, इन्द्र दधि और इन्द्र पय इन तीन यागों से उत्पन्न तीन अपूर्वों से अंगो के उत्पत्ति नामक अपूर्वों के साथ होने से एक समुदाय-(त्रिक) जन्य अपूर्व पैदा होता है। आग्नेयादि यागों के प्रत्येक एक एक उत्पत्तिनामक अपूर्वों से पैदा हुए उन तीन तीन समुदाय से उत्पन्न दो अपूर्वों से एक फलापूर्व नामक महापूर्व पैदा होता है जो फल पैदा करने वाला ( अर्थात्

फल पर्य्यन्त आत्मा में रहने वाला ) अपूर्व कहा जाता है । उसके वाद फल पैदा होता है ।

इससे यह समझना चाहिये कि, सभी अंगों से उपकार प्राप्त दर्श और पौर्णमास यागों से अपूर्व द्वारा स्वर्ग सिद्ध करे। इस प्रकार फलापूर्व=फलपैदा करने वाले अपूर्व की उत्पत्ति के लिये अंगों के सहित प्रधान कार्य्य की इतिकर्तव्यता बताने वाली विधि ही प्रयोग विधि कहाती है ।

## विधियों के तीन भेद ।

विधि के और भी, तीन भेद हैं—१ अपूर्व विधि, २ नियम विधि, ३ और परिसंख्या विधि ।

१४

## अपूर्व विधि ।

अपूर्व विधि उसे कहते हैं, जो अत्यन्त अप्राप्त अर्थ= विषय को बतावे । जैसे 'दर्शपूर्णमास' प्रकरण में 'व्रीहीन् प्रोक्षति' यह विधि अपूर्व विधि है । यदि यह विधि न होती तो दर्श और पौर्णमास याग में काम आने वाले व्रीहियों ( धानों ) में प्रोक्षण ( उनमें जल छिड़कना ) किसी प्रकार भी प्राप्त नहीं हो सकता था । जब यह विधि है तो उन यागों के सम्बन्धी व्रीहियों में प्रोक्षण प्राप्त होता है, इसलिये अत्यन्त अप्राप्त प्रेक्षण अर्थ को बताने के कारण यह विधि अपूर्व विधि है ।

## नियम विधि ।

जो विधि एक पक्ष में प्राप्त विषय को ( सर्वदा के लिये ) नियमित करदे, उसे नियम विधि कहते हैं । जैसे—उसी प्रकरण में 'व्रीहीन् अवहन्ति' ( धान को कूटकर चावल निकालना चाहिये ) यदि यह विधि न होती तो दर्श और पौर्णमास याग के धानों में उत्पत्तिवाक्य द्वारा ज्ञात पुरोडाश के काम में आनेवाले चावलों

को निकालने के अनुकूल भूस्सी अलग करने के काम के लिये, जैसे
कूटना मोनासिब होता है। वैसाही कभी नखों से भूस्सी अलगकर
चावलों को निकाल लेना भी उचित हो सकता है। उस हालत में
तो कूटना नहीं हो सकता, इसलिये ( चावल से भूस्सी अलग
करने के ) कार्य्य को दूसरे प्रकार से भी (नख से भूस्सी छोड़ाकर)
हो जानेके कारण, कूटना इस कार्य्य की विकल्प से प्राप्त हो जाती
है। जब यह विधि है, उस हालत में तो 'कूट कर के ही भूस्सी
अलग करनी चाहिये' ऐसा नियम रहने पर नख से भूस्सी का निका-
लना सब प्रकार रोक दिया जाता है। इसलिये यह नियम विधि है।

यहां शङ्का यह होती है कि, चावल से भुस्सी को अलग करना
तो नख से भी हो सकता है, तो फिर कूटकर ही भुस्सी निकालनी
चाहिये, यह नियम व्यर्थ है। क्योंकि इसमें कोई खास प्रयोजन नहीं
दीखता। इसके उत्तर में कहा जाता है कि, यदि कूटकर चावल
निकाला जायगा तभी उससे कोई अदृष्ट = अपूर्व उत्पन्न होगा
अन्यथा नहीं। इस प्रकार नियमादृष्ट माना गया है। यद्यपि दृष्ट
कोई फल नहीं है। तथापि नियम करने के कारण अदृष्ट फल(अपूर्व)
की उत्पत्ति माननी पड़ती है। वह अपूर्व, याग में उत्पत्ति नामक अपूर्व
पैदा करके फल पैदा करने वाले अपूर्व में सहायक होता है। इस
१५ प्रकार यदि नियमापूर्व न होगा तो फलापूर्व भी न पैदा होगा।
इस कल्पना से नियमापूर्व व्यर्थ नहीं होता है। ऐसाही 'सोमं
यजेत' इत्यादि नियम विधियों में भी समझना चाहिये।

## परिसंख्याविधि

जहां दो बातें एक बार प्राप्त हों उनमें एकको हटा देने वाली
विधिको परिसंख्या विधि कहते हैं जैसे—

अग्निचयन प्रकरण में "इमामगृभ्णन् रसनामृतस्येत्य
श्वाभिधानीमादत्ते" इसमें घोड़े को बागडोर पकड़ने के वास्ते इस

मन्त्र का उपयोग करे ऐसी विधि है। यदि यह विधि न होती तो मन्त्र के अर्थप्रकाशन–सामर्थ्यरूप लिङ्ग से जैसे घोड़े की बागडोर पकड़ना प्राप्त होता है, वैसे ही गदहे की रस्सी पकड़नी भी नियमतः प्राप्त होती ( क्योंकि मन्त्र के अर्थ से तो केवल रस्सी पकड़ना यही निकलता हैं। ) जब यह विधि है, तो यह बात निश्चित हो जाती है कि, इस मन्त्र से घोड़े की ही बागडोर पकड़नी होगी, गदहे की रस्सी नहीं। वह तो विना मन्त्र के यों ही पकड़ना चाहिये। इस प्रकार गर्दभ रसना पकड़ने में यह मन्त्र न पढा जाय इसी अंश में ( निषेध में ) तात्पर्य्य होने से दोनों की प्राप्ति में एक को हटादेने वाली विधि परिसंख्या कहाती है। यह लक्षण घट जाने से यह परिसंख्या विधि हुई। इसी प्रकार "पञ्च पञ्च नखा भक्ष्या." इत्यादि श्लोकों में भी जानना चाहिये।

## १६ श्रुतिलिङ्ग प्रभृति छः भेद

पहले जो प्रयाज प्रभृति याग, दर्श पूर्णमास के अंग कह चुके हैं। वहां किस का किस के साथ अङ्गाङ्गिभाव सम्बन्ध है। इसके पोषक प्रमाण—(१) श्रुति, (२) लिंग, (३) वाक्य, (४) प्रकरण, (५) स्थान (६) और समाख्या भेदसे छः हैं। वे कहे जाते हैं।

### श्रुति प्रमाण।

उनमें ( छओ प्रमाणों में ) 'दध्ना जुहुयात्' इसमें अग्निहोत्र वाक्य से प्राप्त होम को 'जुहुयाद्' इस पदद्वारा उद्देश्य रूप से ग्रहण कर उसके करणरूप से 'दध्ना' इस तृतीया श्रुतिद्वारा दधिका विधान होता है। इस प्रकार यहां श्रुति प्रमाण से दधि होम के अंग हुआ।

### लिङ्ग प्रमाण।

शब्द के सामर्थ्य को लिंग कहते हैं वह दो प्रकार का होता

है। (१) अर्थ(क)गत, (२) शव्दगत,-उसमें अर्थगत लिङ्ग(सामर्थ्य) का उदाहरण—'स्रुवेणावद्यति' यहां पर स्रुवा सामान्यतः 'खण्ड करना' इस क्रिया का अंग रूप से विहित हुआ है। पर वह सामर्थ्यरूप लिंग से आज्य-सान्नाय (घी, दधि, पय) रूप तरल द्रव्य विशेप के ही खण्ड करना रूप क्रिया का अंग होगा। क्यों कि स्रुवा से पुरोडाश ऐसे कड़े द्रव्यका खण्ड नहीं हो सकता इत्यादि।

अर्थ प्रकाश करने के सामर्थ्य को शव्दगत लिङ्ग कहते हैं— उदाहरण, जैसे—'अग्नये त्वा जुष्टं निर्वपामि' इस मन्त्र में 'निर्वपामि' इस क्रिया का अर्थ निर्वाप = समर्पण प्रतीत हो रहा है। अतः निर्वापप्रकाशन के सामर्थ्यरूप शव्दगत लिंग से यह मन्त्रभाग १७ समर्पण में प्रयुक्त होता है। इसी प्रकार जो मन्त्र जिस अर्थ को प्रगट करता है वह उसीका अंग होता है।

### वाक्य-प्रमाण ।

एक पद को दूसरे पद के साथ समभिहार = मेल को ही वाक्य कहते हैं ; जैसे—'ईप त्वा' इत्यादि वाक्य में 'त्वा' पद के साथ 'छिनत्ति' इस पद के प्रयोग होने से परस्पर सम्वन्ध है। अतः यहां 'वाक्य-प्रमाण' का लक्षण घटता है। इस कारण काटने में 'ईपे त्वा०' इत्यादि मन्त्र वाक्य द्वारा प्रयुक्त अंग माना जायगा। या 'अग्नये त्वा जुष्टं निर्वपामि' इस वाक्य में भी 'अग्नये' 'जुष्टं' इन पदोंका भी तो 'निर्वपामि' इस पदसे एक वाक्यतारूप सम्वन्ध है। अतः अग्नि के लिये भाग अर्पण करने में जो यह मन्त्र प्रयुक्त होता है। वह वाक्य प्रमाण से ही होता है।

### प्रकरण-प्रमाण ।

आपस में एक दूसरे के साथ आकांक्षा को प्रकरण कहते हैं।

---

(क) एक पदार्थ को दूसरे पदार्थ के साथ अन्वय की योग्यता को अर्थगत लिङ्ग कहते हैं।

जैसे—"दर्श पौर्णमासाभ्यां स्वर्गकामो यजेत" इसमें 'दर्श' और 'पौर्णमास' यागद्वारा स्वर्गसाधक अपूर्व पैदा करे, ऐसा कहने पर आकांक्षा होती है कि, इन दो यज्ञों से कैसे स्वर्गापूर्व पैदा करे? वहां ही फल वाले इन आग्नेयादि यज्ञों के साथ फल-विधानशून्य 'समिधो यजति' 'तनूनपातं यजति' आज्यभागौ यजति' इत्यादि वाक्यों द्वारा प्रयाजादि यज्ञ भी श्रुति विहित हैं। तो उन वाक्यों में फल न होने से फल की आकांक्षा होती है कि, इनका क्या फल है? वाद को—

प्रयाजादि यज्ञों को फलकी आकांक्षा होने पर और दर्शादि यज्ञों को इति कर्तव्यता ( कथम्भाव ) की आकांक्षा होने पर, इस प्रकार दोनों को परस्पर आकाङ्क्षारूप प्रकरण द्वारा प्रयाजादि सभी यागों को 'दर्श' और 'पौर्णमास' का अंग निश्चय होना पड़ता है।

## स्थान-प्रमाण।

सन्निधान को स्थान कहते हैं जैसे—साम्नाय्यपात्र के सन्निधान में 'शुन्धध्वं' इस मन्त्र के पढे जाने के कारण सन्निधान रूप स्थान प्रमाण से यह मन्त्र सान्नाय्यपात्र के प्रोक्षण में अंग होता है।

## १८ समाख्या-प्रमाण।

संज्ञा को समाख्या कहते हैं, जैसे—अध्वर्यु-काण्ड में कहे गये पदार्थसमूह में 'आध्वर्य्यव' इस संज्ञा के कारण अध्वर्य्यु उसका कर्तारूप से अंग होता है। ( अर्थात् वे सब पदार्थ अध्वर्य्यु से सम्पादित होने चाहिये ) उसी तरह 'ऐन्द्राग्नम्०' इत्यादि स्थलों में काम्येष्टि नामसे प्रसिद्ध ऐन्द्राग्नादि यज्ञों में 'काम्येष्टियाज्यानुवाक्य काण्ड' इस संज्ञा के कारण 'उभा वामिन्द्राग्नी' इत्यादि मन्त्रों

का याज्यानुवाक्य रूप से विनियोग होता है ( अंगरूप से अन्वय होता है। ) अंगरूप से अन्वय को ही विनियोग कहते हैं।

## श्रुत्यादियों में पूर्वपूर्व प्राबल्य दिखाते हैं।

## श्रुतिप्राबल्यनिरूपण।

श्रुत्यादि प्रमाणों का यदि एक स्थान में समावेश होजाय तो उस हालत में पूर्व पूर्व प्रमाण प्रवल होता है और उत्तरोत्तर दुर्वल होता है। जैसे—'कदाचन स्तरीरसी:ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यादि श्रुति अग्निहोत्र प्रकरण में मिलती है। यहां मन्त्र में इन्द्र-रूप अर्थ प्रकाशन के सामर्थ्य होने से 'इन्द्र' प्रकाशन सामर्थ्यरूप लिङ्ग से उसका उपयोग इन्द्रोपस्थान में होना चाहिये, परन्तु 'ऐन्द्या' इस तृतीया श्रुति द्वारा और 'गार्हपत्यं' यह द्वितीया श्रुति द्वारा गार्हपत्य के अङ्ग रूप से इस मन्त्र का विधान हो जाने से लिङ्ग से प्राप्त इन्द्रोपस्थान में इस मन्त्र का अङ्ग होना वाधित हो जाता है।

क्योंकि श्रुति स्वयं विनियोजिका होती है। लिङ्ग तो इन्द्ररूप अर्थ प्रकाशन सामर्थ्य को देखकर 'ऐद्या' इन्द्रमुपतिष्ठते' इस प्रकार श्रुति कल्पनाद्वारा विनियोजक होगा। सो यहां नहीं हो सकता। जहां पर श्रुति विनियोजक नहीं होती जैसे—'अग्नये त्वा जुष्टं निर्वपामि' इत्यादि वाक्यों में। वहां मन्त्र के निर्वाप प्रकाशन सामर्थ्य को देखकर, इस मन्त्र द्वारा 'निर्वाय करना चाहिये' ऐसी श्रुति कल्पना करके लिङ्ग विनियोजक होता ही है। क्योंकि यहां श्रुति कल्पना करने में ( कुछ ) प्रतिवन्धक नहीं है।

## लिङ्गप्रमाण का प्राबल्य।

इसी प्रकार 'स्योनन्ते सदनं कृणोमि०' इत्यादि मन्त्र में

'तस्मिन्०' इस तत् शब्द को पूर्ववाक्य के अर्थ की अपेक्षा रहने के कारण एकवाक्यता की प्रतीति होती है। इसलिये वाक्यप्रमाण से दोनों वाक्य एक मन्त्र मालूम होते है। जिससे दोनों वाक्यों को पढ़कर सदन बनेगा, फिर दोनों को पढ़कर रखा भी जायगा। लिङ्ग (अर्थ) से भिन्न भिन्न दो मन्त्र ज्ञात होरहे हैं। पूर्वार्ध तो (पुरोडाश रखने के लिये) सदन=जगह बनाना बता रहा है। 'तस्मिन्सीद' इत्यादि से पता चलता है कि, इस मन्त्र से उसको आसन पर रखना चाहिये। सो यहां वाक्य की अपेक्षा लिङ्ग वली होनेसे वाक्य को बाधकर 'स्योनं ते सदनं कृणोमि' इससे वेदी बनायी जायगी, और 'तस्मिन् सीद' इसे पढ़कर पुरोडास उसपर रखा जायगा। यही निश्चित पक्ष है।

क्योंकि जबतक 'स्योनन्ते०' इस मन्त्र का 'तस्मिन्सीद' इस मन्त्र के साथ एक वाक्यता के बल पर, किसी प्रकार सादनसामर्थ्य-
२० रूप लिङ्ग (अर्थ) कल्पना करके 'इन विशिष्ट मिले दोनों मन्त्रों से सादन करना चाहिये।' ऐसी श्रुति की कल्पना करनी पड़ेगी। तबतक सदन प्रकाशक रूप जो प्रत्यक्ष लिङ्ग है, उससे कल्पित 'स्योनन्ते०' 'इत्यादि मन्त्र से सदन बनाना चाहिये।' इस श्रुति से 'स्योनंते' इस मन्त्र का शीघ्र ही सदन निर्माण में विनियोग हो जायगा। इस प्रकार इस मन्त्र के बिलकुल निरकांक्ष हो जाने से वाक्य प्रमाण से लिङ्ग की कल्पना कर फिर उससे श्रुति की कल्पना विलम्ब हो जाने से बाधित हो जायगी। यही लिङ्ग से वाक्य का बाध्य होने की उपपत्ति है।

यों ही वाक्य से प्रकरण का बाध, प्रकरण से क्रम का, क्रम से समाख्या का बाध समझना चाहिये। यों ही श्रुति से वाक्य प्रभृति का भी बाध हो जाता है।

इस प्रकार अङ्गाङ्गिभाव बताने वाले श्रुत्यादि प्रमाणों का निरूपण समाप्त हुआ।

## अङ्ग दूसरे के लिये होता है यह बताते हैं ।

अङ्गत्व, शेषत्व, पारार्थ्य ये सभी पर्यायवाचक शब्द हैं ।
दूसरे उद्देश्य से कार्य्य में प्रवृत्त पुरुष के प्रयत्न द्वारा जो
साध्य हो जाय, वही अंग कहा जाता है । प्रयाज प्रभृति अंग, दर्श-
पूर्णमास करने के उद्देश्य से प्रवृत्त पुरुष के प्रयत्न से सम्पादित
होते हैं । अतः उनमें अंग का लक्षण घटता है । दर्श प्रभृति प्रधान
याग प्रयाजादि के उद्देश्य से प्रवृत्त पुरुष के प्रयत्न के विषय नहीं होते
अतः उनमें लक्षण अतिव्याप्त नहीं होता ।

वे अंग दो प्रकार के हैं—(१) सन्निपत्योपकारक, और (२)
आराद्उपकारक ।

### सन्निपत्योपकारक ।

जो अंग साक्षात् या परम्परा सम्बन्ध से प्रधान यज्ञ के स्वरूप
को तैयार कर उसके द्वारा उसके उत्पत्त्यपूर्व में सहायक होते हैं ।
२१ वे सन्निपत्योपकारक कहे जाते हैं । जैसे—व्रीहि प्रभृति द्रव्य और
उनसे सम्बद्ध हनन और प्रोक्षण । अग्निप्रभृति देवता और उनसे
संयुक्त याज्यानुवाक्या वचन प्रभृति । यहां पर प्रोक्षण प्रभृति धान में
कुछ अदृष्ट संस्कारातिशय लाकर, अवहनन प्रभृति भूस्सी
अलग करना रूप दृष्ट संस्कार द्वारा, व्रीहि प्रभृति चूर्ण द्वारा, पुरोडाश
तैयार करते हैं । और उसके द्वारा याग के स्वरूप के और उसके उत्पत्त्य-
पूर्व के कारण होते हैं । योंही याज्यानुवाक्या प्रभृति भी, देवता संस्कार-
द्वारा, और देवता तो साक्षात् ही यज्ञ के स्वरूप का सम्पादन करते हैं
और उसके द्वारा उसके उत्पत्त्यपूर्व के कारण होते हैं । क्योंकि देवता
के उद्देश्य से द्रव्य प्रदान को ही तो यज्ञ कहते हैं । इसलिये द्रव्य
और देवता येही दोनों यज्ञ के स्वरूप हैं । यही सिद्धान्त किया गया

